पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाणि उपस्पृशेत् । चक्षुषी नासिके श्रोत्रे च । अथाप उपस्पृशेत् ॥

श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् । तिष्ठन्नाचामेत्प्रह्वो वा । न वर्षधारासु आचामेत् तथा प्रदरोदके। तप्ताभिश्चाकारणात् । पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् । नाप्सु सतः प्रयमणं विद्यते ; उत्तीर्य त्वाचामेत् । तेषां [आर्याधिष्ठितानां शूद्राणां अन्नसंस्कर्तॄणां] स एवाचमनकल्पः ॥

[नाप्युदकशेषेण वृथाकर्माणि कुर्वीताचामेद्वा ॥ ]

## प्रयमणसामान्यनियमाः

शक्तिविषये न मुहूर्तमपि अप्रयतः स्यात् ॥

न श्मश्रुभिः उच्छिष्टो भवति अन्तरास्ये सद्भिः यावन्न हस्तेनोपस्पृशति । य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् । ये भूमौ न तेष्वाचामेत् । केशानङ्गं वासश्चालभ्याप उपस्पृशेत् । स्वप्ने क्षवथौ शिङ्घाणिकाश्वालम्भे लोहितस्य केशानां अग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं चोपस्पृश्य अप्रयतं च मनुष्यं नीवीं च परिधाय अप उपस्पृशेत् । आर्द्रं वा शकृद्दोषधीर्भूमिं वा । रिक्तपाणिः वयसः उद्यम्य अप उपस्पृशेत् ॥

शुनोपहतः सचेलोऽवगाहेत । प्रक्षाल्य तं देशं अग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥

मूढस्वस्तरे चासंस्पृशन् अन्यान् अप्रयतान् प्रयतो मन्येत। तथा तृणकाष्ठेषु निखातेषु ॥

प्रोक्ष्य वासः उपयोजयेत् । देवताभिधानं चाप्रयतः [वर्जयेत् । ] नाग्निमप्रयत आसीदेत्, इषुमात्रादित्येके ; न चैनमुपधमेत् ॥

आन्नप्राशनात् गर्भा नाप्रयता भवन्ति । आ परिसंवत्सरादित्येके । यावता वा दिशो न प्रजानीयुः । ओपनयनादित्यपरम् । अत्र ह्यधिकारः शास्त्रैर्भवति । सा निष्ठा । स्मृतिश्च ॥

## मूत्रादिविसर्जनसामान्यनियमाः

शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यात् भूम्यां किंचिदन्तर्धाय । छायायां मूत्रपुरीषयोः कर्म वर्जयेत् । न सोपानन्मूत्रपुरीषे कुर्यात् । अग्निमादित्यमपो ब्राह्मणं गा देवताश्चाभिमुखः मूत्रपुरीषयोः कर्म वर्जयेत् । अश्मानं लोष्ठं आर्द्रान् ओषधिवनस्पतीन् ऊर्ध्वान् आच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥

आराच्चावसथात् मूत्रपुरीषे कुर्यात् । अस्तमिते च बहिर्ग्रामात् आवसथात् वा मूलपुरीषयोः कर्म वर्जयेत् । उदङ्मुखो

मूत्रं कुर्यात् । आराच्चावसथात् मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥

मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपान् अन्नलेपान् उच्छिष्टलेपान् रेतसश्च ये लेपाः तान् प्रक्षाल्य पादौ चाचम्य प्रयतो भवति । प्रत्यक् पादावनेजनमिति ॥

## वपनसामान्यनियमाः

[ब्रह्मचारी शिखाजटो वा वापयेदितरान् । ] अथापि ब्राह्मणम् । रिक्तो वा एषः अनपिहितो यन्मुण्डः तस्यैतदपिधानं यच्छिखा इति । [ न समावृत्ता वपेरन् अन्यत्र विहारादित्येके । ] सत्रेषु तु वचनात् वपनं शिखायाः । अन्नसंस्कारे अधिष्ठितानां शूद्राणां अधिकं अहरहः केशश्मश्रुलोमनखवापनम् । अपि वाष्टमीष्वेव वा पर्वसु वा वपेरन् । [मातापित्राचार्यमरणे] अनुभाविनां परिवापनम् । सह वाससा उदकोपस्पर्शनम् ॥

## स्नाननियमः

शनैरपोभ्यवेयात् अभिघ्नन् अभिमुखमादित्यमुदकमुपस्पृशेत् । इति सर्वत्र उदकोपस्पर्शनविधिः* ॥

## नियमः

नियमेषु तपश्शब्दः । तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् । कर्तपत्यमनायुष्यं च । तस्मादृषयोऽ

* See आचमन in page 8, para 1 lines 3-4.

तरेषु न जायन्ते नियमातिक्रमात् । श्रुतर्षयस्तु भवन्ति केचित् ; कर्मफलशेषेण पुनस्सम्भवे । यथा श्वेतकेतुः ॥

यत्किञ्च समाहितोऽब्रह्मप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति । अथो यत्किञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन् ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥

अशूद्राणां अदुष्टकर्मणां उपायनं वेदाध्ययनं अग्न्याधेयं फलवन्ति च कर्माणि ॥

## अथ ब्राह्मणोक्ता विधयः

अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानम् । देवेभ्यः स्वाहाकार आ काष्ठात् पितृभ्यः स्वधाकार ओदपात्रात् स्वाध्याय इति । तेषां महायज्ञा महासत्त्राणीति संस्तुतिः । तथा पुण्यक्रियासु सह संकल्पेन भूयः [फलम्] । प्रयोजयिता मन्ता कर्ता स्वर्ग....फलेषु कर्मसु भागिनः ॥

## स्वाध्यायः

तपःस्वाध्याय इति ब्राह्मणम् । तत्र श्रूयते — स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति । स्वाध्याये च यज्ञोपवीती स्यात् ॥

विद्यां प्रति अनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम्। अथापि वाजसनेयिब्राह्मणम्। ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा यत् स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति। तस्मात् स्तनयति विद्योतमानेऽवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छम्बट्कारायेति। तस्य शाखान्तरे वाक्यसमाप्तिः। अथ यदि वातो वा वायात् स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा सामाभिव्याहरेद्भूर्भुवः सुवः सत्यं तपः श्रद्धायां जुहोमीति वैतत्। तेनो हैवास्यैतदहः स्वाध्याय उपात्तो भवति॥

एवं सत्यार्यसमयेनाविप्रतिषिद्धम्। अध्यायानध्यायँ ह्युपदिशन्ति। तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत॥

नित्यप्रश्नस्य चाविधिना। तस्य विधिः -- अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशे अधीयीत यथाध्यायमुत्सृजन् वाचा। मनसा चानध्याये॥

## गृहस्थाश्रमनियमाः

निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते। अग्निहोत्रं अतिथयः। यच्चान्यदेवं युक्तम्॥

पाणिग्रहणादधि गृहमेधिनोर्व्रतम्। गृहमेधिनः यदशानीयस्य होमा बल्यश्च स्वर्गपुष्टिसंयुक्ताः। तेषां मन्त्राणां उपयोगे

द्वादशाहमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च। उत्तमस्य एकरात्रं उपवासः ॥

## स्थालीपाकः

पर्वसु चोभयोरुपवासः ; औपवस्तमेव कालान्तरे भोजनम् । तृप्तिश्चान्नस्य । अधश्च शयीयाताम् । मैथुनवर्जनं च । श्वोभूते स्थालीपाकः । तस्योपचारः पार्वणेन व्याख्यातः । नित्यं लोक उपदिशन्ति ॥

यत्र क्व चाग्निमुपसमाधास्यन् स्यात् तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वा अद्भिरवोक्ष्य अग्निमुपसमिन्ध्यात् । उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात् । नाप्रोक्षितमिन्धनं अग्नावादध्यात् । उपासने गुरूणां वृद्धानां अतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥

न क्षारलवणहोमो विद्यते । तथावरान्नसंसृष्टस्य । अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयात् । तद्धुतं अहुतं चाग्नौ भवति । न स्त्री जुहुयात् । नानुपेतः ॥

## वैश्वदेवः

आर्याः प्रयताः वैश्वदेवे अन्नसंस्कर्तारः स्युः । आर्याधिष्ठिताः शूद्राः च । नात्मार्थमभिरूपमन्नं पाचयेत् । भाषां कासं क्षवथुं इत्यभिमुखोऽन्नं वर्जयेत् । सिद्धे अन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् । तत् सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥

परोक्षमन्नं संस्कृतं अग्नौ अधिश्रित्य अद्भिः प्रोक्षेत्। तद्देव-पवित्रमित्याचक्षते ॥

बलीनां तस्य तस्य देशे संस्कारः हस्तेन परिमृज्य अवोक्ष्य न्युप्य पश्चात् परिषेचनम् ॥

औपासने पचने वा षड्भिराद्यैः मन्त्रैः प्रतिमन्त्रं हस्तेन जुहुयात् । उभयतः परिषेचनं यथा पुरस्तात् । एवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनम् । सति सूपसंसृष्टेन कार्याः । अपरेणाग्निं सप्तमाष्टमाभ्यां उदगपवर्गम् । उदधानसन्निधौ नवमेन । मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् । उत्तरपूर्व-देशेऽगारस्य उत्तरैः चतुर्भिः । शय्यादेशे कामलिङ्गेन । देहल्यां अन्तरिक्षलिङ्गेन । उत्तरेणापिधान्याम् । उत्तरैः ब्रह्मसदने । दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् । रौद्र उत्तरो यथा देवताभ्यः । तयोर्नानापरिषेचनं धर्मभेदात् । नक्तमेवोत्तमेन वैहायसम् । य एतानव्यग्रः यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च । अग्रं च देयम् । यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तत् भोक्तव्यम् । शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत् ॥

सर्वान् वैश्वदेवे भागिनः कुर्वीत आश्वचाण्डालादिभ्यः । नानर्हद्भ्यो दद्यात् इत्येके । ये नित्या भाक्तिकाः तेषां अनुपरोधेन संविभागः विहितः । काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् । तथा चात्मनोनुपरोधं कुर्यात् यथाकर्मसु समर्थः स्यात् ॥

# श्राद्धनियमाः

सह देवमनुष्याः अस्मिन् लोके पुरा बभूवुः । अथ देवाः कर्मभिः दिवं जग्मुः, अहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैः ब्रह्मणा चामुष्मिन् लोके भवन्ति अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसाय ॥

तत्र पितरः देवताः ब्राह्मणाः त्वाहवनीयार्थे । मासि मासि कार्यम् । अपरपक्षस्यापराह्णः श्रेयान् । तथापरपक्षस्य जघन्यान्यहानि । सर्वेष्वेव अपरपक्षस्य अहस्सु क्रियमाणे पितॄन् प्रीणाति ; कर्तुस्तु कालाभिनियमात् फलविशेषः । प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्ये जायते । द्वितीये स्तेनाः । तृतीये ब्रह्मवर्चसिनः । चतुर्थे क्षुद्रपशुमान् । पञ्चमे पुमाꣳसः बह्वपत्यो न चानपत्यः प्रमीयते । षष्ठेऽध्वशीलोऽक्षशीलश्च । सप्तमे कर्षे राद्धिः । अष्टमे पुष्टिः । नवम एकखुराः । दशमे व्यवहारे राद्धिः । एकादशे कृष्णायसं त्रपुसीसम् । द्वादशे पशुमान् । त्रयोदशे बहुपुत्रो, बहुमित्रो दर्शनीयापत्यः युवमारिणस्तु भवन्ति । चतुर्दश आयुधे राद्धिः । पञ्चदशे पुष्टिः ॥

तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च । स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिः द्राघीयाꣳसं च कालम् । तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन । संवत्सरं गव्येन प्रीतिः । भूयाꣳसमतो माहिषेण । एतेन ग्राम्यारण्यानां पशूनां माꣳसं मेध्यं व्याख्यातम् ॥

खड्गोपस्तरणे खड्गमांसेनानन्त्यं कालम् । तथा शतवलेः मत्स्यस्य मांसेन । वार्ध्रीणसस्य च ॥

प्रयतः प्रसन्नमनाः सृष्टः भोजयेत ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान् । शुचीन्मन्त्रवतः सर्वकृत्येषु भोजयेत् गुणहान्यां तु परेषां समुदेतस्सोदर्योऽपि भोजयितव्यः । एतेनान्तेवासिनो व्याख्याताः । अथाप्युदाहरन्ति —

संभोजिनी नाम पिशाचभिक्षा
नैषा पितॄन् गच्छति नोत देवान् ।
इहैव सा चरति क्षीणपुण्या
शालान्तरे गौरिव नष्टवत्सा ॥

इहैव संभुञ्जती दक्षिणा कुलात् कुलं विनश्यतीति । तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्चेप्सन् । पूर्वेद्युः निवेदनम् । अपरेद्युः द्वितीयम् । तृतीयमामन्त्रणम् । त्रिःप्रायमेके श्राद्धमुपदिशन्ति । यथा प्रथममेव द्वितीयं तृतीयं च ॥

सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासवराध्यं प्राश्नीयात् यथोक्तम् । उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥

उद्ध्रियतामग्नौ च क्रियतां इत्यामन्त्रयते । काममुद्ध्रियतां काममग्नौ च क्रियतां इत्यतिसृष्ट उद्धरेत् जुहुयाच्च ॥

श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥

श्वित्रशिशिपिविष्टः परतल्पगाम्यायुधीयपुत्रः शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणाः भवन्ति ॥

त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्निः ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रश्श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावनाः भवन्ति ॥

न च नक्तं श्राद्धं कुर्वीत । आरब्धे चाभोजनमा समापनात् ॥ [अन्यत्र राहुदर्शनात् । ]*

विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् । कृष्णधान्यं शूद्रान्नं ये चान्ये अनाश्यसंमताः । अहविष्यं अनृतं क्रोधं स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत । अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन् अनग्निपक्ववृत्तिः अच्छायोपगः स्थानासनिकः संवत्सरमेतद्व्रतं चरेत् ॥ [एतदष्टाचत्वारिंशत्संमितमित्याचक्षते । ]*

नित्यश्राद्धम् । बहिर्ग्रामात् शुचयः शुचौ देशे संस्कुर्वन्ति । तत्र नवानि द्रव्याणि । यैः अन्नं संस्क्रियते येषु च भुज्यते । तानि च भुक्तवद्भ्यः दद्यात् । समुदेतांश्च भोजयेत् । न चातद्गुणायोच्छिष्टं प्रयच्छेत् । एवं संवत्सरम् ॥

तेषां उत्तमं लोहेनाजेन कार्यम् । मानं च कारयेत् प्रतिच्छन्नम् । तस्योत्तरार्धे ब्राह्मणान् भोजयेत् । उभयान् पश्यति

* These 2 sutras are not found in some Editions.

ब्राह्मणाꣳश्च भुञ्जानान् माने च पितॄनित्युपदिशन्ति । कृताकृतं अत ऊर्ध्वम् । श्राद्धेन तृप्तिं हि वेदयन्ते पितरः ॥

तिष्येण पुष्टिकामः । गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ, प्राश्य च यद्वातो नातिवाति तदासनोऽजिनं बस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत । अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति । औदुम्बरश्चमसस्सुवर्णनाभः प्रशास्तः । न चान्येनापि भोक्तव्यम् ॥

[यावद्ग्रासꣳ सन्नयन् अस्कन्दयन् नापजिहीत अपजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् । न च मुखशब्दं कुर्यात् । पाणिं च नावधूनुयात् । आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात् । ततोऽग्निमुपस्पृशेत् ॥ ]*

दिवा च न भुञ्जीत अन्यन्मूलफलेभ्यः । स्थालीपाकानुदेश्यानि च वर्जयेत् ॥

[सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥ ]*

नैत्यमिकं तु श्राद्धं स्नेहवदेव दद्यात् । सर्पिर्माꣳसमिति प्रथमः कल्पः । अभावे तैलꣳ शाकमिति ॥

मघासु चाधिकꣳ श्राद्धकल्पेन सर्पिः ब्राह्मणान् भोजयेत् ॥

See pages 24 line 1 and 23 line 13. It is obvious that these sutras do not necessarily belong to this topic.

मासिश्राद्धे तिलानां द्रोणं द्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत् । समुदेतांश्च भोजयेत् न चातद्गुणायोच्छिष्टं दद्युः ॥

उदगयन आपूर्वमाणपक्षस्य एकरात्रं अवरार्ध्यं उपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत । एवं अहरहः आपरस्मात् तिष्यात् । द्वौ द्वितीये । त्रीन् तृतीये । एवं संवत्सरं अभ्युच्चयेन । महान्तं पोषं पुष्यति । आदित एवोपवासः ॥

आत्ततेजसां भोजनं वर्जयेत् । भस्मतुषाधिष्ठानम् । पदा पादस्य प्रक्षालनं अधिष्ठानं च वर्जयेत् । प्रेङ्खोलनं पादयोः । जानुनि चात्याधानं जङ्घायाः । नखैश्च नखवादनम् । स्फोटनानि चाकारणात् । यच्चान्यत् परिचक्षते । योक्ता धर्मयुक्तेषु द्रव्यपरिग्रहेषु च । प्रतिपादयिता च तीर्थे । यन्ता चातीर्थे यतो न भयं स्यात् । सङ्ग्रहीता च मनुष्यान् । भोक्ता च धर्मविप्रतिषिद्धान् भोगान् । एवमुभौ लोकावभिजयति ॥

## अतिथिसत्कारः

स्वधर्मयुक्तं कुटुम्बिनं अभ्यागच्छति धर्मपुरस्कारः नान्यप्रयोजनस्सोऽतिथिर्भवति । अग्निरिव ज्वलन्नतिथिः अभ्या-

गच्छति । तस्य पूजायाꣳ शान्तिः स्वर्गः पुष्टिश्च । काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम् ॥

तमभिमुखोऽभ्यागम्य यथावयस्समेत्य तस्यासनमाहारयेत् । शक्तिविषये नाबहुपादमासनं भवतीत्येके । तस्य पादौ प्रक्षाळयेत् ; शूद्रमिथुनौ इत्येके । अन्यतरोभिषेचने स्यात् । तस्योदकमाहारयेत् मृन्मयेनेत्येके । नोदकमाहारयेत् असमावृत्तः । अध्ययनासांवृत्तिश्चात्राधिका । गोमधुपर्कार्हः वेदाध्यायः आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः । आचार्याय ऋत्विजे श्वशुराय राज्ञे इति परिसंवत्सरात् उपतिष्ठद्भ्यो गौर्मधुपर्कश्च । दधि मधुसृष्टं मधुपर्कः, पयो वा मधुसꣳसृष्टम् । अभाव उदकम् ॥

स्त्रीणां प्रत्याचक्षाणानाꣳ समाहितो ब्रह्मचारीष्टं दत्तꣳ हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते । तस्मादु ह वै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीतापि हैषेवंविध एवंव्रतः स्यात् इति हि ब्राह्मणम् । न चास्मै श्रुतिविप्रतिषिद्धं उच्छिष्टं दद्यात् । यथा क्षार लवणमधुमाꣳसानीति ॥

सान्त्वयित्वा तर्पयेत् रसैः भक्ष्यैः अद्भिरवरार्ध्येनेति । आवसथं दद्यात् । उपरिशय्यां उपस्तरणं उपधानं सावस्तरणं अभ्यञ्जनं चेति । अन्नसꣳस्कर्तारमाहूय व्रीहीन् यवान् वा तदर्थान् निर्वपेत् । अभावे भूमिरुदकं तृणानि कल्याणी वागिति ।

एतानि वै सतः अगारे न क्षीयन्ते कदाचनेति । एवं वृत्तौ अनन्तलोकौ भवतः ॥

उद्धृतान्यन्नान्यवेक्षेत इदं भूया३ इदा३मिति । भूय एव उद्धरेत्येव ब्रूयात् । द्विषन् द्विषतो वा नान्नं अश्नीयात् । दोषेण वा मीमाꣳसमानस्य मीमाꣳसितस्य वा । पाप्मानꣳ हि स तस्य भक्षयतीति विज्ञायते ॥

योऽतिथीनां अग्निः स आहवनीयो यः कुटुम्बे स गार्ह-पत्यः यस्मिन् पच्यते सोऽन्वाहार्यपचनः । ऊर्जं पुष्टिं प्रजां पशून् इष्टापूर्तमिति गृहाणां अश्नाति यः पूर्वं अतिथेः अश्नाति । अतिथिं निराकृत्य यत्र गते भोजने स्मरेत् । ततो विरम्योपोष्य, श्वोभूते यथामनसं तर्पयित्वा सꣳसाधयेत् ; यानवन्तमा यानात् ; यावन्नानुजानीयादितरः । अप्रतीभायाꣳ सीम्नो निवर्तेत ॥

येन कृतावसथः स्यादतिथिः न तं प्रत्युत्तिष्ठेत्, प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥

आहिताग्निं चेत् अतिथिरभ्यागच्छेत् स्वयं एनं अभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति । व्रात्योदकमिति । व्रात्य तर्पयꣳ-स्त्विति । पुराग्निहोत्रस्य होमात् उपाꣳशु जपेत् । व्रात्य यथा ते मनस्तथास्त्विति । व्रात्य यथा ते वशः तथास्त्विति । व्रात्य यथा ते प्रियं तथास्त्विति । व्रात्य यथा ते निकामस्तथास्त्विति ॥

यस्य उद्धृतेषु आहुतेषु अग्निषु अतिथिरभ्यागच्छेत् स्वयं एनं अभ्युदेत्य ब्रूयात् । व्रात्यातिसृज होष्यामि इति अतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेत् जुहुयात् दोषं ब्राह्मणमाह ॥

राजानं चेत् अतिथिः अभ्यागच्छेत् श्रेयसीं अस्मै पूजां आत्मनः कारयेत् ॥

ब्राह्मणायानधीयानाय आसनमुदकमन्नमिति देयम् । न प्रत्युत्तिष्ठेत् । अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् । राजन्यवैश्यौ च ॥

असमुदेतश्चेदतिथिः ब्रुवाण आगच्छेत् । आसनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यात् । एवमस्य समृद्धं भवति । शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् अथास्मै दद्यात् । दासा वा राजकुलादाहृत्य अतिथिवत् शूद्रं पूजयेयुः ॥

एकरात्रिं चेत् अतिथीन् वासयेत् पार्थिवान् लोकानभिजयति । द्वितीयया अन्तरिक्ष्यान्; तृतीयया दिव्यान्; चतुर्थ्या परावतः लोकान्; अपरिमिताभिः अपरिमितान् लोकान् अभिजयति इति विज्ञायते ॥

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥

पयउपसेचनमन्नमग्निष्टोमसम्मितम् । सर्पिषोक्थ्यसम्मितम् । मधुनातिरात्रसम्मितम् । मांसेन द्वादशाहसम्मितम् । उदकेन प्रजावृद्धिरायुषश्च । प्रिया अप्रियाश्चातिथयः स्वर्गं

लोकं गमयन्तीति विज्ञायते । स यत् प्रातर्माध्यन्दिने सायमिति ददाति सवनान्येव तानि भवन्ति । यदनुतिष्ठत्युदवस्यत्येव तत् । यत् सांत्वयति सा दक्षिणा प्रशंसा । यत्संसाधयति तें विष्णु-क्रमाः । यदुपावर्तते सोऽवभृथः । इति हि ब्राह्मणम् ॥

नित्यं उदधानान्यद्भिररिक्तानि स्युः इति गृहमेधिनो-व्रतम् ॥

## भोजननियमाः

अतिथीनेवाग्रे भोजयेत् । बालान् वृद्धान् रोगसम्बद्धान् स्त्रींश्चान्तर्वत्नीः । शेषभोज्यतिथीनां स्यात् ॥

कृतभूमौ तु भुञ्जीत । न नावि भुञ्जीत । तथा प्रासादे । अनाप्रीते मृन्मये भोक्तव्यम् । आप्रीतं चेदभिदग्धे । परिमृष्टं लौहं प्रयतम् । निर्लिखितं दारुमयम् । यथागमं यज्ञे ॥

सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत । भोजने यज्ञोपवीती स्यात् । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत । द्विःपरिमृजेत् । सकृदुपस्पृशेत् । प्राङ्मुखोन्नानि भुञ्जीत ॥

कालयोर्भोजनम् । अतृप्तिश्चान्नस्य । अष्टौ ग्रासा मुने-र्भक्षः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्म-चारिणः आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नतां इति ॥

यावद्ग्रासं सन्नयन् अस्कन्दयन् नापजिहीत अपजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहांगुष्ठम् । न च मुखशब्दं कुर्यात । पाणिं च नावधूनुयात् ॥

आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात् ततोऽग्निमुपस्पृशेत् ॥

यत्र भुज्यते तत्समूह्य निर्हृत्य अवोक्ष्य तं देशममत्रेभ्यो लेपान् संकृष्य अद्भिः संसृज्य उत्तरतः शुचौ देशे रुद्राय निनयेत् । एवं वास्तु शिवं भवति ॥

गृहमेधिनोः पर्वसु चोभयोः उपवासः; औपवस्तमेव कालान्तरे भोजनम् । तृप्तिश्चान्नस्य । यच्चैनयोः प्रियं स्यात्, तदेतस्मिन्नहनि भुञ्जीयाताम् ॥

कः आश्यान्नः । य ईप्सेदिति कण्वः । पुण्य* इति कौत्स यः कश्चिद्दद्यादिति वार्ष्यायणिः । यदिह रजःस्थावरं पुरुषे भोक्तव्यं अथ चेत् चलं दानेन निर्दोषो भवति । शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथापुष्करसादिः । सर्वतोपेतं वार्ष्यायणीयम् । पुण्यस्येप्सतः भोक्तव्यम् । यतः कुतश्चाभ्युद्यतं भोक्तव्यम् । नाननियोगपूर्वकमिति हारीतः ॥

सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके । तस्यापि धर्मोपनतस्य । स्वयमपि अवृत्तौ सुवर्णं दत्वा पशुं वा

* "तपो होमनियमजप्यैः स्वधर्मेण युक्तः पुण्यः इति कौत्सः" –हरदत्तः

भुञ्जीत नात्यन्तमन्ववस्येत् । वृत्तिं प्राप्य विरमेत् । [त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यम् ॥ ]

प्रकृत्या ब्राह्मणस्य भोक्तव्यम् । कारणात् अभोज्यम् । यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति । चरितनिर्वेषस्य भोक्तव्यम् ॥

[यस्य कुले म्रियेत न तत्र अनिर्दशे भोक्तव्यम् । तथानुत्थितायां सूतिकायाम् । अन्तश्शवे च ॥]

अनर्हद्भिः वा समानपङ्क्तौ । भुञ्जानेषु वा यत्रानूत्थाय उच्छिष्टं प्रयच्छेत् आचामेत् वा । भुञ्जानं वा – यत्र शूद्र उपस्पृशेत् ॥

सर्वेषां शिल्पजीवानाम् । ये च शस्त्रमाजीवन्ति । ये चाधिम् । भिषक् । वार्धुषिकः । क्लीबः । राज्ञां प्रैषकरः । अहविर्याजी । चारी । अविधिना च प्रव्रजितः । यश्चाग्नीनपास्यति ॥

मत्तः उन्मत्तः बद्धोणिकः प्रत्युपविष्टः यश्च प्रत्युपवेशयते तावन्तं कालम् ॥

यश्च सर्वान् वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥

दीक्षितः अक्रीतराजकः । अग्नीषोमीयसंस्थायामेव । हुतायां वपायां दीक्षितस्य भोक्तव्यम् । यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् इति हि ब्राह्मणम् ॥

अथ पुराणश्लोकावुदाहरन्ति —

उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ।
भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥
न तस्य पितरोऽश्नन्ति दशवर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निः यस्तामभ्यधिमन्यते ॥ इति ।
चिकित्सकस्य मृगयोः शल्यकृन्तस्य पाशिनः ।
कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम् ॥

अथाप्युदाहरन्ति—

अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशꣳसति ।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करः ॥ इति

[द्विषन् द्विषतो वा नान्नमश्नीयात् दोषेण वा मीमाꣳसमानस्य मीमाꣳसितस्य वा । पाप्मानꣳ हि स तस्य भक्षयतीति विज्ञायते ॥ ]

नवे सस्ये प्राप्ते पुराणमनुजानीयात् । न रसान् गृहे भुञ्जीत अनवशेषं अतिथिभ्यः ॥

नापणीयमन्नमश्नीयात् । तथा रसानां आममाꣳसमधुलवणानीति परिहाप्य । तैलसर्पिषी तूपयोजयेदुदकेऽवधाय ॥

कीटो वाऽमेध्यसेवी; अमेध्यैरवमृष्टम् । यस्मिꣳश्चान्ने केशः स्यात् । अन्यद्वामेध्यम् । मूषिकलाङ्गं वा । मनुष्यैः अवघ्रातं अन्यैर्वामेध्यैः । पदा वा उपहतम् । सिचा वा । शुना वापपात्रेण वा

दुष्टम् । सिचा वोपहृतम् । अप्रयतोपहृतमन्नमप्रयतं न त्वभोज्यम् । अप्रयतेन तु शूद्रेण उपहृतमभोज्यम् । दास्या वा नक्तमाहृतम् । सङ्घान्नमभोज्यम् । परिक्रुष्टं च । कुत्सयित्वा वा यत्रान्नं दद्युः ॥

दद्भिः अपूपस्य नापछिन्द्यात् । कृतान्नं पर्युषितं अखाद्यं अपेयानाद्यम् । शुक्तं च । फाणित पृथुक तण्डुल करम्ब भरुज सक्तु शाक मांस पिष्ट क्षीर विकारौषधि वनस्पतिमूल फल वर्जम् । शुक्तं चापरयोगम् ॥

उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति । धेनोश्चानिर्दशायाः । तथैलकं पयः । तथा कीलालौषधीनां च । सर्वं मद्यमपेयम् ॥

करंजपराण्डुपलारिकाः । क्याक्वभोज्यमिति हि ब्राह्मणम् ॥

हिंसार्थे नासिना मांसं छिन्नमभोज्यम् । एकखुरोष्ट्रगवय ग्रामसूकरशरभगवाम् ॥

यच्चान्यत् परिचक्षते--

धेन्वडुहोः भक्ष्यम् । मेध्यमानडुहमिति वाजसनेयकम् । कुक्कुटो विकिराणाम् । प्लवः प्लुतुदां क्रव्यादः । हंसभासचक्रवाकसुपर्णाश्च । क्रुञ्चक्रौञ्चवाध्र्राणसलक्ष्मणवर्जम् । पञ्चनखानां गोधाकच्छपश्वाविट्शर्यकखड्गशशपूतिखषवर्जम् । अभक्ष्यश्चेटो मत्स्यानाम् । सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥

## अभक्ष्यभोजनप्रायश्चित्तम्

अभोज्यं भुक्त्वा नैष्पुरीष्यम् । तत् सप्तरात्रेणावाप्यते । हेमन्तशिशिरयोर्वोभयोस्सन्ध्योः उदकमुपस्पृशेत् । कृच्छ्रद्वादशरात्रं वा चरेत् । त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं अयाचितव्रतस्त्र्यहं नाश्नाति किञ्चनेति कृच्छ्रद्वादशरात्रस्य विधिः । एतमेवाभ्यसेत् संवत्सरं स कृच्छ्रसंवत्सरः ॥

## सामान्यनियमाः

यज्ञोपवीतीद्विवस्त्रः । नित्यमुत्तरवासः कार्यम् । अपि वा सूत्रमेवोपवीतार्थे । न शक्तिविषये मुहूर्तमपि नग्नो वा स्यात् । सर्वान् रागान् वाससि वर्जयेत् । कृष्णं च स्वाभाविकम् । अनूद्भासिवासो वसीत । अप्रतिकृष्टं च शक्तिविषये ॥

दिवा च शिरसः प्रावरणं वर्जयेत् मूत्रपुरीषयोः कर्म परिहाप्य । उपासने गुरूणां वृद्धानामतिथीनाꣳ होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥

उद्यन्तं अस्तंयन्तं चादित्यं दर्शने वर्जयेत् । अग्निमपश्च न युगपद्धारयीत । नानाग्नीनां सन्निवापं वर्जयेत् । [अग्निं] खट्वायां नोपदध्यात् । प्रतिमुखं अग्निं आह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात् । अग्निमपो ब्राह्मणं गा देवताद्वारं प्रतीवातं च शक्तिविषये नाभिप्रसारयीत ॥

# अभिवादनम्

दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणः अभिवादयीत । उरस्समं राजन्यो मध्यसमं वैश्यः । नीचैः शूद्रः प्राञ्जलिः, सर्वत्र तु प्रत्युत्थाय अभिवादनम् ॥

प्लावनं नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् । स्वर्गमायुश्चेप्सन् ऋत्विक् श्वशुरपितृव्यमातुलान् अवरवयसः प्रत्युत्थाय अभिवदेत् ॥

दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम् ।
त्रिवर्षपूर्वः श्रोत्रियः अभिवादनमर्हति ॥

जायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् । अप्रयतेन नाभिवाद्यम् । तथाप्रयताय । अप्रयतश्च न प्रत्यभिवदेत् । न सोपानद्वेष्टितशिरा अवहितपाणिः वाभिवादयीत । विषमगतायागुरवे नाभिवाद्यम् । अन्वारुह्य वाभिवादयीत । उपसङ्ग्राह्य आचार्य इत्येके । सदैवाभिवादनम् । प्रोष्य च समागमे । पतिवयसः स्त्रियः ॥

# उपसंग्रहणम्

दक्षिणेन पाणिना दक्षिणं पादं अधस्तात् अभिमृश्य सकुष्ठिकमुपसङ्गृह्णीयात् । उभाभ्यामेवोभावापीडयत उपसङ्ग्राह्याविति एके ॥

उदिते त्वादित्य आचार्येण समेत्य उपसङ्ग्रहणम् । न चास्य सकाशे अन्वक्स्थानिनमुपसङ्गृह्णीयात् । यानन्यान् पश्यतोऽस्य उपसङ्गृह्णीयात् त्वेत उपसङ्ग्राह्याः । ऋत्विक्श्वशुरपितृव्यमातुलान् अवरवयसः तूष्णीं वा उपसङ्गृह्णीयात् । सदैव उपसङ्ग्राह्य आचार्य इत्येके ॥

समादिष्टं अध्यापयन्तं यावदध्ययनं उपसङ्गृह्णीयात् । नित्य मर्हन्तमित्येके । समावृत्तेन सर्वे गुरव उपसङ्ग्राह्याः । प्रोष्य च समागमे । भ्रातृषु भगिनीषु यथापूर्वं उपसङ्ग्रहणम् ॥

क्षुद्रान् क्षुद्रचरितांश्च देशान् न सेवेत ॥

अथाप्युदाहरन्ति — प्राङ्मुखोऽन्नानि भुञ्जीत ; उच्चरेद्दक्षिणामुखः उदङ्मुखो मूत्रं कुर्यात् ; प्रत्यक्पादावनेजनं इति ॥

तृणच्छेदनलोष्टविमर्दन ष्ठीवनानि चाकारणात् ।
तथा न ष्ठेवनमैथुनयोः कर्माप्सु कुर्यात् ॥

[भस्मतुषाधिष्ठानम् । पदा पादस्य प्रक्षालनं अधिष्ठानं च वर्जयेत् । प्रोङ्खोलनं च पादयोः । जानुनि चात्याधानं जङ्घायाः । नखैश्च नखवादनम् । स्फोटनानि चाकारणात् । ] पृष्ठतश्च आत्मनः पाणी न संश्लेषयेत् । विषमारोहणावरोहणानि वर्जयेत् । बाहुभ्यां च नदीतरम् । नावं च सांशयिकीम् ॥

दोषफलसंशये न तत् कर्तव्यम् । अनसूयुः दुष्प्रलम्भः स्यात् कुहकशठनास्तिकबालवादेषु । न संशये प्रत्यक्षवद् ब्रूयात् । संशयं प्रत्यक्षमिव न ब्रूयात् ; प्रश्नं च न विब्रूयात् ॥

अथाप्युदाहरन्ति—

मूलं मूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति । धर्मप्रह्लादनकुमालनाय रुदन्ह मृत्युर्व्युवाच प्रश्नमिति । परुषं चोभयोः देवतानां राज्ञश्च । परीवादान् वर्जयेत् । सर्वभूतपरीवादाक्रोशांश्च । गोः दक्षिणानां कुमार्याश्च परिवादान् वर्जयेत् । श्रेयसां च ; विद्ययाच विद्यानां प्रतिघातं वर्जयेत् ॥

नाधेनुमधेनुरिति ब्रूयात् धेनुभव्येत्येव ब्रूयात् । न भद्रं भद्रमिति ब्रूयात्, पुण्यं प्रशस्तमित्येव ब्रूयात् । नासौ मे सपत्न इति ब्रूयात्, यद्यसौ मे सपत्न इति ब्रूयात् । द्विषन्तं भ्रातृव्यं जनयेत् । नेन्द्रधनुरिति परस्मै ब्रूयात् । दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्यात् वर्जयेत्त्वेनं धर्मेषु ॥

वर्णज्यायसां पूजा कर्तव्या वृद्धतराणां च । ब्राह्मणस्य .... पदोपस्पर्शनं वर्जयेत् । पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितं अभितिष्ठेत् । अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् । ब्राह्मणांश्च । अनुज्ञाप्य वातिक्रामेत् । नासम्भाष्य श्रोत्रियं व्यतिव्रजेत् । अरण्ये च स्त्रियं कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥

अनामयं क्षत्रियं पृच्छेत् । अनष्टं वैश्यं आरोग्यं शूद्रम् । सर्वनाम्ना स्त्रियो राजन्य वैश्यौ च न नाम्ना । मातरमाचार्यदारं चेत्येके । दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः । पितापुत्रौ स्म तौ विद्धि तयोऽस्तु ब्राह्मणः पिता ॥

राज्ञः पन्था ब्राह्मणेनासमेत्य ; समेत्य तु ब्राह्मणस्यैव पन्थाः । यानस्य भाराभिनिहतस्यातुरस्य स्त्रिया इति सर्वैः दातव्यः । वर्णज्यायसां चेतरैः वर्णैः । अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥

गोरिति पदोपस्पर्शनं वर्जयेत् हस्तेन चाकारणात् । स्पृहतीं च गां नाचक्षीत । संसृष्टा च वत्सेनानिमित्ते । न पततः संचक्षीत । वत्सन्ततीं च नोपरिगच्छेत् । प्रेङ्खावन्तरेण नातीयात् । गार्दभं यानं आरोहणे वर्जयेत् । यच्चान्यत् परिचक्षते यच्चान्यत् परिचक्षते ॥

सङ्गृहीता मनुष्यान् । भोक्ता चधर्मविप्रतिषिद्धभोगान् । एवमुभौ लोकावभिजयति ॥

## दानम्

देशतः कालतः शौचतः सम्यक् प्रतिगृहीतृत इति दानानि प्रतिपादयति । सर्वाणि उदकपूर्वाणि दानानि । यथा श्रुतिविहारे । [योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च ] । प्रतिपादयिता तीर्थे ।

यन्ता चातीर्थे यतो न भयꣳ स्यात् । [अग्रं च देयम्] । भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोः बुभूर्षार्हतश्च नियमविलोपः। तत्र गुणान् समीक्ष्य यथाशक्ति देयम् । दत्वा नानुकथयेत्। कृत्वा नानुस्मरेत् । इन्द्रियप्रीत्यर्थस्य तु भिक्षणं अनिमित्तं न तदाद्रियेत॥*

## स्त्रीसंबन्धविषयः

सर्वनाम्ना स्त्रियः .... न नाम्ना । मातरमाचार्यदारमित्येके । मातरिपितर्याचार्यवत् शुश्रूषा । [भगिनीषु यथापूर्वमुपसङ्ग्रहणम् । ] नित्या च पूजा यथोपदेशम्। माता पुत्रत्वस्य भूयाꣳसि कर्माण्यारभते । तस्याꣳ शुश्रूषा नित्या पतितायामपि । न तु धर्मसन्निवापः स्यात् । पतिवयसः स्त्रियः । अरण्ये च स्त्रियं [नासंभाष्य व्यतिव्रजेत्] ॥

धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत । अन्यतराभावे कार्या प्रागग्न्याधेयात् । आधाने हि सतीकर्मभिस्संबध्यते येषामेतदङ्गम्। सदा निशायां दारमलंकुर्वीत । आनिशाया जागरणम् । मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत । अहन्यसंवेशनम् । ऋतौ च सन्निपाते दारेणानुव्रतम् । अन्तराले अपि दार एव । ब्राह्मणवचनाच्च संनिवेशनम् । स्त्रीवाससैव सन्निपातः स्यात्। यावत्सन्निपातं चैव सह शय्या, ततो नाना । उदकोपस्पर्शनमपि वा लेपान् प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥

* Read with the line 14 on page 35.

## विवाहविचारः

सगोत्राय दुहितरं न प्रयच्छेत् । मातुश्च योनिसम्बन्धेभ्यः । ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेत् शक्तिविषयेणालंकृत्य ॥

आर्षेषु दुहितृमते मिथुनौ गावौ देयौ । दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् । मिथः कामात् सांवर्तेते स गान्धर्वः । शक्तिविषयेण द्रव्याणि दत्वा आवहेरन् स राक्षसः । तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान् । यथायुक्तो विवाहः तथा युक्ता प्रजा भवति ॥

सगोत्रस्थानीयां न परेभ्यः समाचक्षीत । कुलाय हि स्त्री प्रदीयतें इत्युपदिशन्ति तदिन्द्रियदौर्बल्यात् विप्रतिपन्नम् । अविशिष्टं हि परत्वं पाणेः । तद्व्यतिक्रमे खलु पुनरुभयोः नरकः । नियमारम्भणः हि वर्षीयानभ्युदये एवमारम्भणात् अपत्यात् । सवर्णायां अन्यपूर्वायां सकृत् सन्निपाते पादः पततीत्युपदिशन्ति । एवं अभ्यासे पादः पादः । चतुर्थे सर्वम् ॥

सवर्णापूर्वशास्त्रविहितायां यथर्तुग च्छतः पुत्राः तेषां कर्मभिस्संबन्धः दायेनाव्यतिक्रमश्चोभयोः । पूर्ववत्यां असंस्कृतायां वर्णान्तरे च मैथुने दोषः । तत्रापि दोषवान् पुत्र एव ॥

## पुत्रविषयः

उत्पादयितुः पुत्रः इति हि ब्राह्मणम् । अथाप्युदाहरन्ति ॥

इदानीमेवाहं जनकः स्त्रीणामीर्ष्यामि नो पुरा। यदा यमस्य सादने जनयितुः पुत्रमब्रुवन्॥

रेतोधाः पुत्रं नयति परेत्य यमसादने तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः॥

अप्रमत्ता रक्षथ तन्तुमेतं
मा वः क्षेत्रे परबीजानि वाप्सुः।
जनयितुः पुत्रो भवति साम्पराये
मोघं वेत्ता कुरुते तन्तुमेतमिति॥

## दायः

कुटुम्बिनौ धनस्येशाते। तयोरनुमते अन्येऽपि तद्धितेषु वर्तेरन्। जायापत्योः न विभागो विद्यते। पाणिग्रहणाद्धि सहत्वं कर्मसु। तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च। न हि भर्तुः विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति॥

दानं क्रयधर्मश्चापत्यस्य न विद्यते। विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते। तस्मात् दुहितृमतेऽतिरथं शतं देयं तन्मिथुयाकुर्यादिति। तस्यां क्रयशब्दः संस्तुतिमात्रं धर्माद्धि संबन्धः॥

एकधनेन ज्येष्ठं तोषयित्वा, जीवन् पुत्रेभ्यो दायं विभजेत् समं, क्लीबं उन्मत्तं पतितं च परिहाप्य। पुत्राभावे यः प्रत्यासन्नः

सपिण्डः । तदभाव आचार्य आचार्यभावेऽन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् । दुहिता वा । सर्वाभावे राजा दायं हरेत ॥

"ज्येष्ठो दायाद इत्येके ; देशविशेषे, सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य । रथः पितुः परिभाण्डं च गृहे अलङ्कारो भार्याया ज्ञातिधनं चेत्येके । " तच्छास्त्रैर्विप्रतिषिद्धम् ॥

मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते । अथापि तस्मात् ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवत् श्रूयते । अथापि नित्यानुवादमविधिमाहुः न्यायविदः यथा तस्मादजावयः पशूनाꣳ सह चरन्तीति । तस्मात् स्नातकस्य मुखं रेफायतीव । तस्मात् बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति । सर्वे हि धर्मयुक्ताः भागिनः । यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत ॥

## मृतेषु नियमाः

मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमात् पुरुषात् यावता वा संबन्धो ज्ञायते तेषां प्रेतेषु उदकोपस्पर्शनं गर्भान् परिहाप्य आपरिसंवत्सरान् । मातापितरावेच तेषु । हर्तारश्च । भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् । आतुरव्यञ्जनानि कुर्वीरन् । केशान् प्रकीर्य पाꣳसूनोप्य एकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्ति । एवं त्रिः ॥

तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत् स्त्रिय आहुस्तत्कुर्वन्ति । इतरेषु चैतदेवैक उपदिशन्ति ॥

यत्र कुले म्रियेत न तत्र अनिर्दशे भोक्तव्यम् । तथानुत्थितायां सूतिकायाम् । [गुरुषु संस्थितेषु त्र्यहाः अनध्ययनम् । ] तथा सम्बन्धेषु ज्ञातिषु मातरि पितरि आचार्ये इति द्वादशाहाः । तेषु चोदकस्पर्शनं तावन्तं कालम् । अनुभाविनां च परिवापनम् । न समावृत्ता वपेरन् अन्यत्र विहारादित्येके । आचार्ये त्रीनहोरात्रान् इत्येके । श्रोत्रियसंस्थितायां अपरिसंवत्सरायां एकाम् । सब्रह्मचारिणीत्येके ॥

एतेन देशकुलधर्माः व्याख्याताः ॥

## पतिताः

न पतितैः संव्यवहारः विद्यते । तथा अपपात्रैः । यः प्रमत्तः [ करोति ] प्राप्तं दोषफलं सह सङ्कल्पेन भूयः । एवं दोषवत्सु कर्मसु । यो भूयः आरभते तस्मिन् फलविशेषः । प्रयोजयिता मन्ता कर्तेति नरकफलेषु भागिनः । तेषां इच्छतां प्रायश्चित्तम् ॥

## अथ पतनीयानि

स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनम् । मातुः पितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानं असंयोगसंयोगः । अधर्माणां तु सततमाचारः ॥

(१) [यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा काण्वपुष्करसादी । सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः । शम्योषा युग्यघासः न स्वामिनः प्रतिषेधयन्ति । अतिव्यवहारो व्युद्धो भवति । सर्वत्रानुमितिपूर्वमिति हारीतः ॥ ]

स्तेनः प्रकीर्णकेशोꣳऽसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्यात् वधे मोक्षः । अनुज्ञाते अनुज्ञातारमेनः स्पृशति ॥

अग्निं वा प्रविशेत् तीक्ष्णं वा तप आयच्छेत् । भक्तापचयेन आत्मानꣳ समाप्नुयात् । कृच्छ्रसंवत्सरं वा चरेत् । अथाप्युदाहरन्ति ॥

स्तेयं कृत्वा .... चतुर्थकाला मितभोजिनःस्युः अपोभ्यवेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिः वर्षैः अप पापं नुदन्ते ॥

(२) [यः प्रमत्तः हन्ति प्राप्तं दोषं फलम् । सह संकल्पेन भूयः एवमेवान्येष्वपि दोषवत्सु कर्मसु ॥ ]

पूर्वयो :वर्णयोः वेदाध्यायꣳ हत्वा सवनगतं वाभिशस्तः । ब्राह्मणमात्रं च । गर्भं च तस्याविज्ञातम् । आत्रेयीं च स्त्रियम् । यो ह्यात्मानं परं वा अभिमन्यतेऽभिशस्त एव स भवति । तस्य निर्वेषः॥

अरण्ये कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य । तस्य पन्थाः अन्तरा वर्त्मनी ; दृष्ट्वा

चान्यमुत्क्रामेत् । खण्डेन लोहितकेन शरावेण ग्रामे प्रतितिष्ठेत । कोभिशस्ताय भिक्षामिति सप्तागारं चरेत् । सा वृत्तिः । अलब्धोपवासः । गाश्च रक्षेत् । तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेर्थः । द्वादशवर्षाणि चरित्वा सिद्धः सद्भिः सम्प्रयोगः ॥

आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोपजित्य वा मुक्तः । आश्वमेधिकं वावभृथमवेत्य मुच्यते । धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव ॥

येष्वाभिशस्त्यं तेषां एकाङ्गं छित्त्वा अप्राणिहिंसायाम् ॥

अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति सांशित्येतरेतरयाजका इतरेतराध्यापका मिथः विवाहमानाः । पुत्रान् सन्निष्पाद्य ब्रूयुः – विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्यास्सम्प्रत्यपत्स्यतेति । अथापि न सेन्द्रियः पतति । तदेतेन वेदितव्यं अङ्गहीनोऽपि साङ्गं जनयति ॥

मिथ्यैतदिति हारीतः । दधिधानीसधर्मा स्त्री भवति । यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियते । एवमशुचिशुक्लं यन्निर्वर्तते न तेन सह सम्प्रयोगो विद्यते ॥

प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा सङ्ग्रामं गत्वा अवतिष्ठेत तत्रैनं हन्युः । अपि वा लोमानि त्वचं मांसमिति हावयित्वाग्निं प्रविशेत् । गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव

विधिना ओत्तमादुच्छ्वासाच्चरेत् । नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥

अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थं आदाय खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणः चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति । ग्रामे प्राणवृत्तिं प्रतिलभ्य-शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि म आर्यैस्सह सम्प्रयोगो विद्यते । एतेनैव विधिनोत्तमात् उच्छ्वासाच्चरेत् । नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥

क्षत्रियꣳ हत्वा गवाꣳ सहस्रं वैरयातनार्थं दद्यात् । शतं वैश्ये । दश शूद्रे । ऋषभश्चात्राधिकस्सर्वत्र प्रायश्चित्तार्थः । स्त्रीषु चैतेषां एवम् ॥

वायसप्रचलाक बर्हिणचक्रवाकहꣳसभासमण्डूकनकुलडेरिकाश्व हिꣳसायां शूद्रवत् प्रायश्चित्तम् । धेन्वनडुहोश्चाकारणात् । धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥

यो हिꣳसार्थं अभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे ॥

(३) गुर्वीसखिं गुरुसखिं च गत्वा अन्याꣳश्च परतल्पान् । नागुरुतल्पे पततीति एके । [सवर्णायां अन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति । एवमभ्यासे पादः पादः । चतुर्थे सर्वम् ॥]

गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशं अनावृत्तिं व्रजेत् । ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् । गुरुतल्पगामी तु सुषिरां सूर्मिं प्रविश्य उभयतः आदीप्य अभिदहेदात्मानम् । मिथ्यैतदिति हारीतः यो ह्यात्मानं परं वा अभिमन्यते अभिशस्त एव स भवति । एतेनैव विधिना ओत्तमात् उच्छ्वासाच्चरेत् । नास्यास्मिन् लोके प्रत्यापत्तिः विद्यते । कल्मषं तु निर्हण्यते ॥

[गुरुदारं च गत्वा .... चतुर्थकाला मितभोजिनःस्युः अपोभ्यवेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिः वर्षैः अप पापं नुदन्ते ॥ ]

दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् । स्त्रियास्तु भर्तृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासः तावन्तं कालम् ॥

अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः । अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप् । यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः । चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥

नाश्यः आर्यः शूद्रायाम् । वध्यः शूद्रः आर्यायाम् । दारं चास्य कर्शयेत् ॥

(४) सुरापोऽग्निस्पर्शां सुरां पिबेत् । .... सुरां च पीत्वा चतुर्थकाला मितभोजिनः स्युः अपोऽभ्यवेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिः वर्षैः अप पापं नुदन्ते ॥

अनार्यवपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने शूद्रायां च रेतस्सिक्त्वाऽयोनौ च दोषवच्च कर्माभिसन्धिपूर्वं कृत्वा अनभिसन्धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रैर्यथा कर्माभ्यासः ॥

गर्दभेनावकीर्णो निरृतिं पाकयज्ञेन यजेत । तस्य शूद्रः प्राश्नीयात् ॥

अथापरम् । बह्वन्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति । [अधर्माहृतान् भोगाननुज्ञाय न वयं चाधर्मश्च इत्यभिव्याहृत्य अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन् अक्षीराक्षारलवणं भुञ्जानो द्वादशवर्षाणि नागारं प्रविशेत् ।] ततस्सिद्धिः । अथ सम्प्रयोगःस्यादार्यैः ; एतदेवान्येषामपि पतनीयानाम् ॥

अथाशुचिकराणि

एतान्यपि पतनीयानीत्येके । शूद्रगमनं आर्यस्त्रीणाम् । प्रतिषिद्धानां मांसभक्षणम् । शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् । मनुष्याणां मूत्रपुरीषप्राशनम् । शूद्रोच्छिष्टं

अपपात्रगमनं चार्याणाम् । अतोऽन्यानि दोषवन्त्यशुचिकराणि भवन्ति। अभीचारानुव्याहारावशुचिकरावपतनीयौ । पतनीयौ इति हारीतः ॥

अनाक्रोश्यं आक्रुश्य, अनृतं वोक्त्वा त्रिरात्रं अक्षीराक्षारलवणभोजनम् । शूद्रस्य सप्तरात्रमभोजनम् । स्त्रीणां चैवम् ॥

स्वपन्नमभिम्रुक्तोऽनाश्वान् वाग्यतो रात्रिमासीत । श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् । स्वपन् अभ्युदितोऽनाश्वान् वाग्यतोहस्तिष्ठेत् । आतमितोः प्राणमायच्छेदित्येके । स्वप्नं वा पापकं दृष्ट्वा, अर्थं वा सिषाधयिषन्, नियमातिक्रमे चान्यस्मिन् प्राणमायच्छेत् ॥

अभिनिम्रुक्ताभ्युदितकुनखिश्यावदाग्रदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन् अशुचिकरनिर्वेषः गरीयान् गरीयान् । तच्च लिङ्गं चरित्वा उद्धार्यमित्येके ॥

चण्डालोपस्पर्शने संभाषायां दर्शने च दोषः । तत्र प्रायश्चित्तम् । अवगाहनमपामुपस्पर्शने, संभाषायां ब्राह्मणसंभाषा दर्शने ज्योतिषां दर्शनम् ॥

पतनीयवृत्तिस्त्वशुचिकराणां द्वादशमासान् द्वादशार्धमासान् द्वादशद्वादशाहान् द्वादशसप्ताहान् द्वादशत्र्यहान् द्वादशद्व्यहान् द्वादशाहं, सप्ताहं, त्र्यहं, द्व्यहमेकाहम् ॥

इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥

## मुख्यप्रायश्चित्तम्

अध्यात्मिकान् योगान् अनुतिष्ठेत् न्यायसंहितानानैश्चारिकान् । आत्मलाभान्न परं विद्यते ॥

## श्रोत्रियविशेषधर्माः

धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति । प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धार्म्यो ब्राह्मणस्य ॥

स्वकर्म ब्राह्मणस्य अध्ययनं अध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं सिलोञ्छः । अन्यच्चापरिगृहीतम् ॥

अविहिता ब्राह्मणस्य वाणिज्या । आपदि व्यवहरेत पण्यानां अपण्यानि व्युदस्यन् । मनुष्यान् रसान् रागान् गन्धान् अन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलिमरीचे धान्यं मांसमायुधं सुकृताशां च । तिलतण्डुलांस्त्वेव धान्यस्य-विशेषेण न विक्रीणीयात् । अविहितश्चैतेषां मिथो विनिमयः । अन्नेन चान्नस्य मनुष्याणां मनुष्यैः रसानां चरसैः गन्धानां च गन्धैर्विद्यया च विद्यानाम् । अक्रीतपण्यैर्व्यवहरेत । मुञ्जबल्वजैः मूलफलैः । तृणकाष्ठैरविकृतैः ॥

नात्यन्तमन्ववस्येत् । वृत्तिं प्राप्य विरमेत् । परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत ॥

**परिग्रहणम्**

धर्मतः आहरेत् । विषमगते त्वाचार्य उग्रतः शूद्रतो वा आहरेत् । सर्वदा शूद्रतः उग्रतः वा आचार्यार्थस्य आहरणं धार्म्यं इत्येके ॥

मध्वामं मार्गं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासः च उग्रतः प्रतिगृह्याणि । एतान्यपि नानन्तेवास्याहृतानीति हारीतः । आमं वा गृह्णीरन् । कृतान्नस्य वा विरसस्य । न सुभिक्षाःस्युः । यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा काण्वपुष्करसादी । सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः । शम्योषायुग्यघासो न स्वामिनः प्रतिषेधयन्ति । अतिव्यवहारः व्यृद्धो भवति । सर्वत्रानुमितिपूर्वमिति हारीतः । [अन्यच्चापरिगृहीतम् । ] अधर्माहृतान् भोगान् अनुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्य अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन् अक्षीराक्षारलवणं भुञ्जानः द्वादशवर्षाणि नागारं प्रविशेत् । ततस्सिद्धिः ॥

स्वयमप्यवृत्तौ सुवर्णं दत्वा पशुं वा भुञ्जीत । नात्यन्तमन्ववस्येत् । वृत्तिं प्राप्य विरमेत् ॥

**आचार्यः**

यस्माद्धर्मानाचिनोति स आचार्यः । ब्राह्मणः आचार्यः स्मर्यते । आपदि ब्राह्मणेन राजन्ये वैश्ये वा अध्ययनम् ।

अनुगमनं च पश्चात् । तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥

स हि विद्यातः तं जनयति । तच्छ्रेष्ठं जन्म । शरीरमेव मातापितरौ जनयतः । तमसो वा एष तमः प्रविशति यमविद्वान् उपनयते यश्चाविद्वानिति हि ब्राह्मणम् । तस्मिन् अभिजनविद्यासमुदेतꣳ समाहितꣳ सꣳस्कर्तारमीप्सेत् । तस्मिꣳश्चैव विद्याकर्मान्तं अविप्रतिपन्ने धर्मेभ्यः । तस्मै न द्रुह्येत् कदाचन । आचार्योऽप्यनाचार्यो भवति श्रुतात् परिहरमाणः । न पतितं आचार्य .... दर्शनार्थो गच्छेत् । न चास्मात् भोगानुपयुञ्जीत । यदृच्छा सन्निपात उपसङ्गृह्य तूष्णीं व्यतिव्रजेत् ॥

यथागमं शिष्येभ्यः विद्यासम्प्रदाने नियमेषु च युक्तः स्यात् । एवं वर्तमानः पूर्वापरान् सम्बन्धान् आत्मानं च क्षेमे युनक्ति ॥

[गोमधुपर्कार्हो वेदाध्यायः । आचार्यः .... । आचार्याय .... परिसंवत्सरात् उपतिष्ठते गौर्मधुपर्कश्च ॥ ]

उपाकरणाद्योत्सर्जनात् अध्यापयितुः नियमः । लोमसंहरणं माꣳसं श्राद्धं मैथुनमिति च वर्जयेत् । ऋत्वे वा जायाम् । प्रवचनयुक्तः वर्षाशरदं मैथुनं वर्जयेत् । शयानश्चाध्यापनं वर्जयेत् । न च तस्यां शय्यायां अध्यापयेत् यस्यां शयीत । अनध्यायःनिशायां अन्यत्र धर्मोपदेशात् शिष्येभ्यः । मनसा वा स्वयम् । ऊर्द्ध्वं अर्धरात्रादध्यापनम् ॥

तस्मिन् गुरोः वृत्तिः । जात्याचारसंशये धर्मार्थमागतं अग्निं उपसमाधाय जातिमाचारं च पृच्छेत् । साधुतां चेत् प्रतिजानीते अग्निरुपद्रष्टा वायुरुपश्रोतादित्योनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत । नासमये न कृच्छ्रं कुर्वीत त्रिश्श्रावणं त्रिस्सहवचनमिति परिहाप्य । अध्ययनार्थेन यं चोदयेत् न चैनं प्रत्याचक्षीत । न चास्मिन् दोषं पश्येत् । पुत्रमिवैनमनुकाङ्क्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् । नचैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यात् अनापत्सु । अपराधेषु चैनं सततमुपालभेत । अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रं आनिवृत्तेः ॥

निवृत्तं चरितब्रह्मचर्यं अन्येभ्यो धर्मेभ्योऽनन्तरो भवेति अतिसृजेत् । न समावृत्ते समादेशः विद्यते । तद्द्रव्याणां न कथयेत् आत्मसंयोगेनाचार्यः ॥

**राज्ञस्तु विशेषात् वक्ष्यामः**

एतान्येव [अध्यनाध्यापनादीनि] । क्षत्रियस्य अध्यापन याजन परिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥

दक्षिणाद्वारं वेश्म पुरं च मापयेत् । अन्तरस्यां पुरि वेश्म । तस्य पुरस्तात् आवसथः तदामन्त्रणमित्याचक्षते । दक्षिणेन पुरं सभा दक्षिणेनोदग्द्वारा यथोभयं संदृश्येत बहिरन्तरं चेति । सर्वेष्वेव

अजस्रा अग्नयः स्युः । अग्निपूजा च नित्या यथा गृहमेधे । आवसथे श्रोत्रियावराध्यानतिथीन् वासयेत् । तेषां यथागुणं आवसथाः शय्यान्नपानं च विदेयम् । राजानं चेदतिथिः अभ्यागच्छेत् श्रेयसीं पूजामस्मै आत्मनः कारयेत् ॥

भृत्यानामनुरोधेन क्षेत्रं वित्तं च ददत् ब्राह्मणेभ्यो यथार्हं अनन्तान् लोकान् अभिजयति । नाननूचानं ऋत्विजं वृणीते न पणमानम् । अयाज्योऽनधीयानः । युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् । ब्राह्मणस्वानि अपजिगीषमाणः यो राजा हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिणः इति । एतेनान्ये शूराः व्याख्याताः प्रयोजने युध्यमानाः तनुत्यजः । गुरूनमात्यांश्च नातिजीवेत् ॥

सभाया मध्ये अधिदेवनमुद्धत्य अवोक्ष्य अक्षान् निवपेत् युग्मान् वैभीतकान् यथार्थान् ॥

आर्याः शुचयः सत्यशीलाः दीवितारःस्युः ॥

ग्रामेषु नगरेषु च आर्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् । तेषां पुरुषाः तथागुणाः एव स्युः । आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्यः अन्यत्र न विद्येरन् ॥

सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् । क्रोशो ग्रामेभ्यः तत्र यन्मुष्यते तैः तत्प्रतिदाप्यम् ॥

धार्म्यं शुल्कं अवहारयेत् । अकरश्श्रोत्रियः । सर्ववर्णानां च स्त्रियः । कुमाराश्च प्राक् व्यञ्जनेभ्यः । ये च विद्यार्थी वसन्ति ।

तपस्विनश्च ये धर्मपराः। शूद्रश्च पादावनेक्ता। अन्धमूकबधिर-रोगाविष्टाश्च। ये व्यर्था द्रव्यपरिग्रहैः॥

न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वावसीदेत् अभावात् बुद्धिपूर्वं वा कश्चित्॥

क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते॥

## दण्डः

[प्रयोजयिता मन्ता कर्ता इति स्वर्गनरकफलेषु कर्मसु भागिनः॥]

प्राप्ते निमित्ते दण्डाकर्मणि राजानमेनः स्पृशति। अनुज्ञाते अनुज्ञातारमेनः स्पृशति। न च सन्देहे दण्डं कुर्यात्। सुविचितं विचित्य देवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत। एवं वृत्तो राजा उभौ लोकावभिजयति॥

विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेषु अवि-निपातिनः। सन्देहे लिङ्गतो दैवेनेति विचित्य, पुण्याहे प्रातरग्ना-विद्धेऽपामन्ते राजवति उभयतः समाख्याप्य सर्वानुमते मुख्यः सत्यं प्रश्नं ब्रूयात्। अनृते राजा दण्डं प्रणयेत्, नरकश्चात्राधिक-स्साम्पराये। सत्ये स्वर्गस्सर्वभूतप्रशंसा च॥

शास्त्रैरधिगतानां इन्द्रियदौर्बल्यात् विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेत् यथाकर्म यथोक्तम्। तस्य चेत् शास्त्रमिति प्रवर्तेरन् राजानं गमयेत्, राजा पुरोहितं धर्मार्थकुशलम् , स ब्राह्मणान् नियुञ्ज्यात् ; बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् । इतरेषां वर्णानां आप्राणविप्रयोगात् समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् । आचार्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥

न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङावृत्तानां आर्या वधं परिचक्षते ॥

क्षेत्रं परिगृह्य उत्थानाभावात् फलाभावे यस्समृद्धः स भावि तदपहार्यः । अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् । तथा पशुपस्य। अवरोधनं चास्य पशूनाम् । हित्वा व्रजमादिनः कर्शयेत् पशून्नातिपादयेत् । अवरुध्य पशून्मारणे नाशने वा स्वामिभ्योऽवसृजेत् । प्रमादात् अरण्ये पशून् उत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् । पुनः प्रमादे सकृदवरुध्य तत ऊर्ध्वं न सूर्क्षेत् ॥

परपरिग्रहमविद्वान् आददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः । विदुषो वाससः परिमोषणम् । अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥

जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः । वाचि पथि शय्यायां आसन इति समीभवतः दण्डताडनम् । पुरुषवधे स्तेये

भूम्यादान इति स्वान्यादाय वध्यः । चक्षुनिरोधस्त्वेतेषु ब्राह्मणस्य । नियमातिक्रमणमन्यं वा रहसि बन्धयेत् । आ समापत्तेः, असमापत्तौ नाश्यः ॥

अबुद्धिपूर्वं अलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः । बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः । सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्य । कुमार्यां तु स्वान्यादाय नाश्यः । अथ भृत्ये राज्ञा । रक्ष्ये चात ऊर्ध्वं मैथुनात् । निर्वेषाभ्युपाये तु स्वामिभ्यः अवसृजेत् चरिते यथापुरं धर्माद्धि सम्बन्धः ॥

**वैश्यविशेषधर्माः**

क्षत्रियवत् वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवणिज्याधिकम् ॥

**शूद्रविशेषधर्माः**

शुश्रूषा शूद्रस्येतरेषां वर्णानाम् । पूर्वस्मिन् पूर्वस्मिन् वर्णे निश्श्रेयसं भूयः । आर्याधिष्ठिताः शूद्राः वैश्वदेवे अन्नसंस्कर्तारः स्युः । [सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च । आथर्वणस्य शेष इत्युपदिशन्ति ॥

## उपनयनम्

उपनयनं विद्यार्थस्य श्रुतितः संस्कारः । सर्वेभ्यः वै वेदेभ्यः सावित्र्यनूच्यते इति हि ब्राह्मणम् ॥

वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यꣳ, शरदि वैश्यं; गर्भाष्टमेषु ब्राह्मणं, गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यम् ॥

अथ काम्यानि— सप्तमे ब्रह्मवर्चसकामं, अष्टमे आयुष्कामं नवमे तेजस्कामं, दशमे अन्नाद्यकामं, एकादशे इन्द्रियकामं, द्वादशे पशुकामम् ॥

आषोडशात् ब्राह्मणस्य अनात्ययः आद्वाविꣳशात् क्षत्रियस्य, आचतुर्विꣳशात् वैश्यस्य यथा व्रतेषु समर्थः स्यात् यानि वक्ष्यामः ॥

अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् । अथोपनयनम् । ततस्संवत्सरमुदकोपस्पर्शनम् । अथाध्याप्यः ॥

अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसꣳस्तुताः । तेषां अभ्यागमनं भोजनं विवाहमिति च वर्जयेत् । तेषां इच्छतां प्रायश्चित्तम् । यथा प्रथमे अतिक्रमे ऋतुरेवꣳ संवत्सरः । अथोपनयनम् । तत उदकोपस्पर्शनम् ॥

प्रतिपूरुषꣳ संख्याय संवत्सरान् यावन्तोनुपेताःस्युः । सप्तभिः पावमानीभिः 'यदन्ति यच्च दूरक' इत्येताभिः यजुः पवित्रेण सामपवित्रेणाङ्गिरसेनेति । अपि वा व्याहृतीभिरेव । अथाध्याप्यः॥

अथ यस्य प्रपितामहादि नानुस्मर्यते उपनयनं, ते श्मशानसꣳस्तुताः । तेषां अभ्यागमनं भोजनं विवाहमिति वर्जयेत् । तेषां इच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेत् ।

अथोपनयनम् । तत उदकोपस्पर्शनं पावमान्यादिभिः । अथ गृहमेधोपदेशनम् । नाध्यापनम् । ततो यो निवर्तते तस्य संस्कारः यथा प्रथमे अतिक्रमे । तत ऊर्ध्वं प्रकृतिवत् ॥

[सर्वेषां आश्रमाणां उपनयनप्रभृति समान आचार्यकुले वासः । उपेतस्य आचार्यकुले ब्रह्मचारिवासः । ] न ब्रह्मचारिणः विद्यार्थस्य परोपवासोऽस्ति ॥

यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः ॥

रजस्वलो रक्तदंत्सत्यवादी स्यादिति ब्राह्मणम् । जटिलः । शिखाजटो वा वापयेदितरान् ॥

मौञ्जी मेखला त्रिवृत् ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् । ज्या राजन्यस्य, मौञ्जी वायोमिश्रा । आवीसूत्रं वैश्यस्य, सैरी तामलीत्येके ॥

पालाशो दण्डो ब्राह्मणस्य । नैय्यग्रोधस्कन्धजोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥

वासः—शाणी क्षौमाजिनानि । काषायं चैके वस्त्रमुपदिशन्ति । माञ्जिष्ठं राजन्यस्य । हारिद्रं वैश्यस्य । हारिणमैणेयं वा कृष्णं ब्राह्मणस्य । रौरवं राजन्यस्य । बस्ताजिनं वैश्यस्य । आविकं सार्ववर्णिकम् । कम्बलश्च । ब्रह्मवृद्धिमिच्छन् अजिनान्येव

वसीत । क्षत्रवृद्धिमिच्छन् वस्त्राण्येवोभयवृद्धिमिच्छन् उभयमिति हि ब्राह्मणम् । अजिनं त्वेवोत्तरं धारयेत् । यज्ञोपवीती द्विवस्त्रः अधो निवीतस्त्वेकवस्त्र. । [अजिनं] कृष्णं चेदनुपस्तीर्णासनशायी स्यात् उपानहौ छत्रं यानमिति च वर्जयेत् ॥

## अथ ब्रह्मचर्यविधिः

स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥

गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनं अध्ययनसंवृत्तिरिति । अतोऽन्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥

स्वाध्यायधृक् धर्मरुचिः तपस्वी ऋजुः, मृदुः, शान्तः, दान्तः, ह्रीमान्, दृढधृतिः, अग्लास्नुः अक्रोधनः, अनसूयुः, अजनवादशीलः, रहश्शीलः, अगन्धसेवी सिद्ध्यति ब्रह्मचारी । [ नियमेषु तपश्शब्दः तदतिक्रमे विद्याकर्म निस्स्रवति ब्रह्म सहापत्यात् एतस्मात् ॥ ]

सर्वाह्णं सुयुक्तोऽध्ययनात् अनन्तरोध्याये । तथा गुरुकर्मसु । मनसा चानध्याये । आहूताध्यायी च स्यात् ॥

सदा महान्तं अपररात्रमुत्थाय गुरोः तिष्ठन् प्रातरभिवादमभिवादयीतासावहं भो इति ॥

अङ्गानि न प्रक्षालयीत। प्रक्षालयीत त्वशुचिलिप्तानि गुरोरसन्दर्शे। उत्सन्नश्लाघः नाप्सु श्लाघमानः स्नायात्॥

उदिते त्वादित्य आचार्येण समेत्य उपसङ्ग्रहणम्। [गुरुसन्निधौ चाधीहि भो इत्युक्त्वाधीयीत।] अभिमुखोऽनभिमुखम्। अनासन्नः अनतिदूरे, यावदासीनो बाहुभ्यां प्राप्नुयात्। अप्रतिवातं अनुवाति वीतः। अनुपस्थकृतः। अप्रतिष्टब्धः पाणिना। अनपश्रितोऽन्यत्र॥

एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत्। यथावकाशं बहवः॥

अग्निमिद्ध्वा परिसमूह्य समिध आदध्यात् सायंप्रातः यथोपदेशम्। सायमेवाग्निपूजा इत्येके। समिद्धमग्निं पाणिना परिसमूहेत् न समूहन्या। प्राक्तु यथाकामी। नाग्न्युदकशेषेण वृथा कर्माणि कुर्वीताचामेद्वा। नाप्रोक्षितं इन्धनमग्नौ आदध्यात्॥

अग्निं नाप्रयत आसीदेत। इषुमात्रादित्येके। न चैनमुपधमेत्। खट्वायां नोपदध्यात्॥

सर्वं लाभमाहरन् गुरवे सायंप्रातरमत्रेण भिक्षाचर्यं चरेत् भिक्षमाणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च॥

भवत्पूर्वया ब्राह्मणो भिक्षेत। भवन्मध्यया राजन्यः; भवदन्त्यया वैश्यः। न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति॥

नानुमानेन भैक्षं उच्छिष्टं दृष्टश्रुताभ्याम् । तत्समाहृत्य उपनिधाय आचार्याय प्रब्रूयात् । तेन प्रदिष्टं भुञ्जीत । विप्रवासे गुरोराचार्यकुलाय । तैः विप्रवासे अन्येभ्योऽपि श्रोत्रियेभ्यः । गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा । प्रोषितः भैक्षादग्नौ कृत्वा भुञ्जीत । नात्मप्रयोजनः चरेत् ॥

भैक्षꣳ हविषा सꣳस्तुतं तत्राचार्यो देवतार्थे । आहवनीयार्थे च । तं भोजयित्वा यदुच्छिष्टं प्राश्नाति । हविरुच्छिष्टमेव तत् । यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः ॥

पितुः ज्येष्ठस्य च भ्रातुः उच्छिष्टं भोक्तव्यम् । धर्मविप्रतिपत्तौ अभोज्यम् । उपेतः स्त्रीणामनुपेतस्य च उच्छिष्टं वर्जयेत् ॥

नानुदेश्यं भुञ्जीत । तथा क्षारलवणमधुमाꣳसानि । एतेन अन्ये नियमा व्याख्याताः ।

भुक्त्वा स्वयम् अमत्रं प्रक्षालयीत । न चोच्छिष्टं कुर्यात् । अशक्तौ भूमौ निखनेत् । अप्सु वा प्रवेशयेत् । आर्याय वा पर्यवदध्यात् । अन्तर्धिने वा शूद्राय ।

स एषः ब्रह्मचारिणः यज्ञः नित्यप्रततः ॥

आचार्याधीनः स्यादन्यत्र पतनीयेभ्यः । हितकारी गुरोः अप्रतिलोमयन् वाचा, देवमिवाचार्यमुपासीत अविकथयन् अविमना वाचꣳशुश्रूषमाणोऽस्य । अन्तेवास्यनन्तेवासी भवति विनि-

हितात्मा गुरावनैपुणमापद्यमानः । [उपासने गुरूणां....यज्ञोपवीती स्यात् ॥]

अथाहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः । [सर्वं लाभमाहरन् गुरवे .... ।], सायं प्रातरुदकुम्भमाहरेत् । सदाऽरण्यादेधानाहृत्याधो निदध्यात् ॥

प्रमादात् आचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत् । निवर्तयेद्वा । अनिवृत्तौ स्वयं कर्माण्यारभेत ॥

स गुप्त्वा संविशन् ब्रूयात् धर्मगोपायमाजूगुपमहमिति । सदा निशायां गुरुं संवेशयेत्, तस्य पादौ प्रक्षाल्य संवाह्य; अनुज्ञातः संविशेत् । अदिवास्वापी, अधासनशायी, स्वप्नं च वर्जयेत् । अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥

न बहिर्वेदे गतिर्विद्यते । [असंवृत्तौ गतिरेव तस्मिन् । समादिष्टमध्यापयन्तं यावदध्ययनमुपसंगृह्णीयात् । न गतिर्विद्यते । ] वृद्धानां तु । [ब्रह्मणि मिथः विनियोगे न गतिर्विद्यते । ] शास्तुश्च अनागमाद् वृत्तिरन्यत्र ॥

नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् । न चैनमभिप्रसारयीत । न खट्वायां सतोऽभिप्रसारणमस्तीत्येके । न चास्य सकाशे संविष्टो भाषेत ; अभिभाषितस्त्वासीनः प्रतिब्रूयात् । तिष्ठति च नासीतानासनयोगविहिते । आसीने च न संविशेत् । अनूत्थाय तिष्ठन्तं, गच्छन्तमनुगच्छेत् ; धावन्तमनुधावेत् ॥

न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽसीदेत् । अध्वापन्न-स्तु कर्मयुक्तो वाऽसीदेत् ; न चेदुपसीदेत् । चेष्टति च चिकीर्षन् तच्छक्तिविषये ॥

भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत्, आचामेद्वा । किं करवाणीत्यामन्त्र्य उत्तिष्ठेत् तूष्णीं वा । प्रेषितः तदेव प्रतिपद्येत ॥

नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥

यानमुक्तः अध्वनि अन्वारोहेत् । सभानिकषकटस्वस्त-रांश्च ॥

व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् । आपद्यर्थं ज्ञापयेत् ॥

न चास्य सकाशे अन्वक्स्थानिनमुपसङ्गृह्णीयात् । गोत्रेण वा कीर्तयेत् । न चैनं प्रत्युत्तिष्ठेत् ; अनूत्तिष्ठेद्वा । अपि चेत्तस्य गुरुः स्यात् । देशात्त्वासनाच्च संसर्पेत् ॥

नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके । यस्मिंस्त्व-नाचार्यसंबन्धात् गौरवं वृत्तिः तस्मिन् अन्वक्स्थानीयेप्याचार्यस्य ॥

यां विद्यां कुरुते गुरौ, तेप्यस्याचार्या ये तस्यां गुरोः वंश्याः । यानन्यान् पश्यतोऽस्योपसंगृह्णीयात्तदा त्वेत उपसं-ग्राह्याः । आचार्यप्राचार्यसन्निपातें प्राचार्यायोपसंगृह्य उपसंजिघृक्षेत् आचार्यम् । प्रतिषेधेदितरः । लुप्यते पूजा चास्य सकाशे ॥

अन्यत्रोपसङ्ग्रहणात् उच्छिष्टाशनात् आचार्यवत् आचार्य-दारे वृत्तिः। तथा समादिष्टेऽध्यापयति। वृद्धतरे च सब्रह्मचारिणि उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः॥

समानग्रामे च वसतामन्येषां वृद्धतराणां प्राक्प्रातराशात् अभिवादयीत। समादिष्टं....उपसंगृह्णीयात्। नित्यमर्हन्तमित्येके। पतिवयसः स्त्रियः॥

आत्मप्रशंसां परगर्हामिति च वर्जयेत्। न स्मयेत, यदि स्मयेत अपिगृह्य स्मयेत इति हि ब्राह्मणम्। अनृत्तदर्शी। सभाः समाजांश्चागन्ता। मैथुनं न चरेत्। गुरोरुदाचारेषु अकर्ता स्वैरिकर्माणि॥

न प्रेक्षेत नग्नां स्त्रियम्। नोपजिघ्रेत् स्त्रियं मुखेन। न हृदयेन प्रार्थयेत्। नाकारणादुपस्पृशेत्। स्त्रीभिः यावदर्थसंभाषी॥

ओषधिवनस्पतीनां आच्छिद्य नोपजिघ्रेत्। नास्तमिते समिद्धारः गच्छेत्॥

## अध्ययननियमाः

[ तपस्स्वाध्याय इति ब्राह्मणम्। ] सर्वेषामुपनयनप्रभृति आचार्यकुले वासः। उपेतस्य आचार्यकुले ब्रह्मचारिवासः अष्टा-चत्वारिंशद्वर्षाणि। पादूनम्। अर्धेन। त्रिभिर्वा। द्वादशावरार्ध्यम्। आऽविचिकित्साया ब्रह्म निगन्तव्यमिति हारीतः॥

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्। अर्धपञ्चमांश्चतुरो मासानित्येके। सर्वेषामनूत्सर्गः विद्यायाः ॥

ओंकारः स्वर्गद्वारं तस्मात् ब्रह्म अध्येष्यमाणः एतदादि प्रतिपद्येत। विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म। यज्ञेषु चैतदादयः प्रसवाः। लोके च भूतिकर्मसु एतदादीन्येव वाक्यानि स्युः यथा पुण्याहꣳ स्वस्त्यृद्धिमिति ॥

गुरुसन्निधौ चाधीहि भो इत्युक्त्वा अधीयीत। अध्यापयेद्वा। अधीयानेषु वा यत्रान्यो व्यवेयात् एतमेव शब्दमुत्सृज्य अधीयीत। उभयत उपसंग्रहणमधिजिगाꣳसमानस्य चाधीत्य च। अधीत्य चाविप्रक्रमणꣳ सद्यः। यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेत्। एवमुभयोः शिवं भवति ॥

यदृच्छायामसंवृत्तौ गतिरेव तस्मिन्। [आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम्। अनुगमनं च पश्चात्। तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात्।] ब्रह्मणि मिथः विनियोगे न गतिर्विद्यते। ब्रह्म वर्धते इत्युपदिशन्ति। नासमये न कृच्छ्रं कुर्वीत त्रिःश्रावणं त्रिःसहवचनमिति परिहाप्य। एवं [दोषफलसꣳशये न तत् कर्तव्यम्] अध्यायानध्याये ॥

निगमेषु अध्ययनं वर्जयेत् ग्रामेण अध्यवसिते क्षेत्रेण वा नानध्यायः। ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत। आनडुहेन

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्। अर्धपञ्चमांश्चतुरो मासानित्येके। सर्वेषामनूत्सर्गः विद्यायाः॥

ओंकारः स्वर्गद्वारं तस्मात् ब्रह्म अध्येष्यमाणः एतदादि प्रतिपद्येत। विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म। यज्ञेषु चैतदादयः प्रसवाः। लोके च भूतिकर्मसु एतदादीन्येव वाक्यानि स्युः यथा पुण्याहꣳ स्वस्त्यृद्धिमिति॥

गुरुसन्निधौ चाधीहि भो इत्युक्त्वा अधीयीत। अध्यापयेद्वा। अधीयानेषु वा यत्रान्यो व्यवेयात् एतमेव शब्दमुत्सृज्य अधीयीत। उभयत उपसंग्रहणमधिजिगाꣳसमानस्य चाधीत्य च। अधीत्य चाविप्रक्रमणꣳ सद्यः। यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेत्। एवमुभयोः शिवं भवति॥

यदृच्छायामसंवृत्तौ गतिरेव तस्मिन्। [आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम्। अनुगमनं च पश्चात्। तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात्।] ब्रह्मणि मिथः विनियोगे न गतिर्विद्यते। ब्रह्म वर्धते इत्युपदिशन्ति। नासमये न कृच्छ्रं कुर्वीत त्रिःश्रावणं त्रिःसहवचनमिति परिहाप्य। एवं [दोषफलसꣳशये न तत् कर्तव्यम्] अध्यायानध्याये॥

निगमेषु अध्ययनं वर्जयेत् ग्रामेण अध्यवसिते क्षेत्रेण वा नानध्यायः। ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत। आनडुहेन

स्तनयित्नौ .... नीहारे च मानसं परिचक्षते । विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुः त्र्यहमनध्यायः । यावद्भूमिर्व्युदकेत्येके । एकेन द्वाभ्यां वैतेषामाकालम् ॥

वायुर्घोषवान्भूमौ वा तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् । मुहूर्तं विरते वाते । अभ्रञ्चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्र धनुः प्रतिसूर्यमत्स्यश्च वाते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत् कालम् । अननूक्तं चापर्तौ छन्दसो नाधीयीत । प्रदोषे च सार्वकालिकमाम्नातम् ॥

सूर्याचन्द्रमसोः ग्रहणे भूमिचलेऽपस्वान उल्कायामग्न्युत्पाते च सर्वासां विद्यानां सार्वकालिकमाकालम् ॥

सर्वेषु च शब्दकर्मसु यत्र स ंसृज्येरन् । श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च । सलावृक्यामेकसृक इति स्वप्नपर्यान्तम् ॥

स्वैरिकर्मसु च. यथा पादप्रक्षालनोत्सादनानुलेपनाणीति । तावन्तं कालं नाधीयीताध्यापयेद्वा । छर्दयित्वा स्वप्नान्तम्, सर्पिर्वा प्राश्य ॥

मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वा इत्येके । पर्युषितैः तण्डुलैः आममा ंसेन च नानध्यायः । तथौषधिवनस्पतिमूलफलैः । शूक्तं चात्मसंयुक्तम् । प्रदोषे च भुक्त्वा प्रोदकयोः पाण्योः प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ।

आ च विपाकात् । अश्राद्धेन तु पर्यवदध्यात् । .... अप्रायत्ये प्रेतान्ने मानसं परिचक्षते । श्राद्धभोजन एवैके [मानसं परिचक्षते ] ॥

श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानो वानुज्ञाप्य अधीयीत, अध्यापयेद्वा । विप्रोष्य च समध्ययनं तदहः ॥

गवां चावरोधे । तदहरागतेषु च ग्रामं, बाह्येषु । अपि सत्सु ॥

वध्यानां च यावता हन्यन्ते । अन्तश्शवमन्तश्चाण्डालम् । अभिनिर्हृताना ᳲ सीम्न्यनध्यायः । संदर्शने चारण्ये । पूतिगन्धः ॥

श्मशानवत् शूद्रपतितौ । समानागार इत्येके । शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेव अनध्यायः । तथाऽन्यस्या ᳲ स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥

यथोक्तमन्यदतः परिषत्सु ॥

ब्रह्म अध्येष्यमाणो मलवद्वाससेच्छन् संभाषितुं ब्राह्मणेन संभाष्य तथा संभाषेत । संभाष्य तु ब्राह्मणेनैव संभाष्य अधीयीत । एवं तस्याः प्रजानिश्श्रेयसम् ॥

[ गुरुषु संस्थितेषु त्र्यहाः । तथा संबन्धेषु ज्ञातिषु । मातरि पितरि आचार्य इति द्वादशाहाः । आचार्ये त्रीनहोरात्रानित्येके । श्रोत्रियस ᳲ स्थायामपरिसंवत्सरायामेकाम् । सब्रह्मचारिणीत्येके ॥ ]

**मिथ्याधीतप्रायश्चित्तम्**

संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्; स्वाध्याय एवोत्सृजमानो वाचमाचार्य आचार्यदारे भिक्षाचर्ये च। एवमन्येष्वपि दोषवत्सु अपतनीयेषु उत्तराणि यानि वक्ष्यामः ॥

काममन्युभ्यां वा जुहुयात् कामोऽकार्षीत् मन्युरकार्षीत् इति। जपेद्वा ॥

पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामशः सहस्रकृत्व आवर्तयेदप्राणायामशो वा ॥

श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य वा श्वोभूते माहानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा। इष्टियज्ञक्रतून् वा पवित्रार्थानाहरेत् ॥

## स्नातकः

विद्यया स्नातीत्येके। तथा व्रतेनाष्टाचत्वारिंशत्परीमाणेन। विद्याव्रतेन चेत्येके। तेषु सर्वेषु स्नातकवद्वृत्तिः। समाधिविशेषात् श्रुतिविशेषाच्च पूजायां फलविशेषः। .... स्नातको .... मधुपर्कार्हः ॥

**अथ स्नातकव्रतानि**

यथा ब्रह्मचारिणो वृत्तम्। कृत्वा विद्यां यावतीं शक्नुयात् वेददक्षिणामाहरेत् धर्मतः यथाशक्ति ॥

सशिरा वमज्जनमप्सु वर्जयेत् । अस्तमिते च स्नानम् । पालाशमासनं पादुके दन्तप्रक्षालनमिति च वर्जयेत् । संध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥

सर्वान् रागान् वाससि वर्जयेत्, कृष्णं च स्वाभाविकम् । अनूद्भासि वासो वसीत । अप्रतिकृष्टं च शक्तिविषये ॥

माल्यालिप्तमुखः उपलिप्तकेशश्मश्रुः अक्तोऽभ्यक्तः वेष्टित्युपवेष्टिती कांचुक्युपानही पादुकी । उदाचारेषु चास्यैतानि न कुर्यात् कारयेद्वा । यथा दन्तप्रक्षालनोत्सादनावलेखनानीति । स्नातस्तु काले यथाविध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेदित्येके । अनाविस्स्रगनुलेपणः स्यात् ॥

त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यम् । नाब्राह्मणायोच्छिष्टं प्रयच्छेत्, यदि प्रयच्छेत् दन्तान् स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥

सह वसन् सायंप्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत्, विप्रोष्य च तदहरेव पश्येत् । स्तुतिं च गुरोः समक्षं यथा सुस्नातमिति ॥

मुहुश्चाचार्यकुलं दर्शनार्थो गच्छेत् यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति । यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥

समावृत्तेन सर्वे गुरव उपसंग्राह्याः ॥

समावृत्तं चेदाचार्योऽभ्यागच्छेत् तमभिमुखोऽभ्यागम्य तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत् ; पुरस्कृत्य उपस्थाप्य यथोपदेशं पूजयेत् । तिष्ठन् सव्येन पाणिना अनुगृह्य आचार्यमाचमयेत् । अन्यं वा समुदेतम् ॥

आसने शयने भक्ष्ये भोज्ये वाससि वा सन्निहिते निहीनतरवृत्तिः स्यात् । स्थानासनचंक्रमणस्मितेष्वनुचिकीर्षन् । उच्चैस्तरां नासीत । तथा बहुपादे । सर्वतः प्रतिष्ठिते । शय्यासने चाचरिते नाविशेत् । संनिहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठेवनदन्तस्खलननिश्शृङ्खणभ्रुक्षेपणतालननिष्ट्यानीति । दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत् । वाक्येन वाक्यस्य प्रतीघातमाचार्यस्य वर्जयेत् । श्रेयसां च ॥

यथा ब्रह्मचारिणो वृत्तम् ; समावृत्तस्य एतदेव सामयाचारिकमेतेषु [आचार्यदार-सब्रह्मचारि-आचार्यपुत्रेषु] ॥

समावृत्तः [लाभमाहरन्] मात्रे दद्यात् , माता भर्तारं ; भर्ता गुरुम् । धर्मकृत्येषु वोपयोजयेत् ॥

नगरप्रवेशनानि वर्जयेत् । पूर्वेण ग्रामात् निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा । न कुसृत्या ग्रामं प्रविशेत् । यदि प्रविशेत् 'नमो रुद्राय वास्तोष्पतये' इत्येतामृचं जपेदन्यां वा

रौद्रीम् । क्षुद्रान् क्षुद्रचरितांश्च देशान् न सेवेत । सभाः समाजांश्च । समाजं चेद्गच्छेत् प्रदक्षिणीकृत्य अपेयात् ॥

दिवादित्यः सत्त्वानि गोपायति नक्तं च चन्द्रमाः । तस्मात् अमावास्यायां निशायां स्वाधीय आत्मनो गुप्तिमिच्छेत् प्रायत्य ब्रह्मचर्यकाले चर्यया च । सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः । निवेशे वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ ॥

समाहितः आचार्यकुले वसेत् भूयः श्रुतमिच्छन्निति श्वेतकेतुः । "एतेन ह्यहं भूयः पूर्वस्मात्कालात् श्रुतमकुर्वीति" । तच्छास्त्रैर्विप्रतिषिद्धम् । निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते । अग्निहोत्रमतिथयः । यच्चान्यदेवंयुक्तम् ॥

## अथ वानप्रस्थः

अत एव ब्रह्मचर्यवान् प्रव्रजति । तस्योपदिशन्ति । एकाग्निरनिकेतः स्यादशर्माऽशरणो मुनिः । स्वाध्याय एवोत्सृजमानो वाचम् ॥

तस्यारण्यमाच्छादनं विहितम् । ततो मूलैः फलैः पर्णैः तृणैरिति वर्तयंश्चरेत् । अन्ततः प्रवृत्तानि; ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरः संयोगः फलतो विशिष्टः ॥

अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति ॥

विद्यां समाप्य दारं कृत्वा अग्नीनाधाय कर्माण्यारभते सोमावरार्घ्यानि यानि श्रूयन्ते। गृहान् कृत्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद्वसेत् । एको वा। शिलोञ्छेन वर्तयेत् । न चात ऊर्ध्वं प्रतिगृह्णीयात् । अभिषिक्तश्च जुहुयात् ॥

तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासीपरशुदात्रकाजानाम् । द्वन्द्वानामेकैकमादायेतराणि दत्वा अरण्यमवतिष्ठेत । तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षा आच्छादनं च । येषु कर्मसु पुरोडाशाः चरवस्तेषु कार्याः । सर्वं चोपांशु सह स्वाध्यायेन ; नारण्यमभ्याश्रावयेत् । अग्न्यर्थं शरणम् । आकाशे स्वयम् । अनुपस्तीर्णे शय्यासने ॥

नवे सस्ये प्राप्ते पुराणमनुजानीयात् । ग्रासाः .... भक्षः षोडशारण्यवासिनः ॥

भूयांसं वा नियममिच्छन् अन्वहमेव पात्रेण सायं प्रातरर्थमाहरेत् । ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयन् चरेत् अन्ततः प्रवृत्तानि ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरः संयोगः फलतो विशिष्टः ॥

## अथ परिव्राजः

अत एव ब्रह्मचर्यवान् प्रव्रजति । तस्योपदिशन्ति ॥

अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः । स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् । [अष्टौ ग्रासा मुनेर्भक्षः ।] तस्य मुक्तमाच्छादनं विहितम् । सर्वतः परिमोक्षमेके ॥

सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्य आत्मानमन्विच्छेत् ॥

'बुद्धे क्षेमप्रापणम्' । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम् ॥

# GLOSSARY

[The meanings given hereunder are chiefly taken out from the commentary called '*Ujjvala*' of *Haradatta Misra*, who is a great commentater and has written commentaries on many Sutra works of Apastamba, Asvalayana and Gautama. Besides there are many original works. Mr. P. V. Kane has given an adequate note on this author in his history of Dharma-Sutras. According to him Haradatta is a Scholar of the twelfth century.]

## अ

| | |
|---|---|
| अग्निष्टोमः | तन्नामकसोमयागः, सोमयागानां प्रकृतिभूतः नित्यः |
| अग्निहोत्रं | अग्निहोत्रं नाम होमस्य नामधेयम्, यज्ञविशेषः, माससाध्यः यावज्जीवसाध्यश्च |
| अग्नीषोमीयः | अग्निसोमदेवतासंबन्धी |
| अग्न्याधेयं | श्रुतिविहिताग्निसंस्कारः, अग्निरक्षणम्, गार्हपत्यदक्षिणाग्न्याहवनीययज्ञानामाधानम्-स्थापनम् |

| | |
|---|---|
| अग्रदिधिषुः | ज्येष्ठायामनूढायां पूर्वं कनीयस्या वोढा |
| अग्लास्नुः | उत्साहसम्पन्नः |
| अच्छम्बट्कारः | अभ्यर्थत्वम् |
| अजावयः | अजाश्च अवयश्च |
| अणिकः | पुत्रात् श्रुतग्राही, पुत्राचार्यः |
| अतिरात्रः | रूक्षसोमसंस्थासु एकः |
| अतिसृष्टः | अनुज्ञातः |
| अत्याधानं | अवस्थानम् |
| अधिजिगांसमानः | अध्येतुकामः |
| अधिदेवनं | यस्योपरि कितवाः अक्षैर्दीव्यन्ति तत् स्थानम् |
| अनड्वान् | वृषभः |
| अनपाश्रितः | न आश्रितः |
| अनाप्रीतं | न आप्रीतम् see आप्रीतम् |
| अनाविस्स्रक् | अप्रकाशितपुष्पमालः |
| अनाश्वान् | अभुञ्जानः |
| अनिर्दशं | अनिर्गतः दशाहः |
| अनुदेश्यः | श्राद्धाद्यर्थमुद्दिष्टः |
| अनूचानः | साङ्गस्य वेदस्य अध्येता, प्रवक्ता ; त्रैविद्यपुत्रः, विनीतः, साङ्गवेदविचक्षणः |

| | |
|---|---|
| अनूत्सर्गः | दानम्, वर्जनम् |
| अन्वक्स्थानीयः | अनु–पश्चात् अञ्चति–गच्छतीति अन्वक्, यस्य अनुपदं पश्चाद्गच्छति सः सेव्यमानः पूजार्हः |
| अपिधानी | कवाटम् – अर्गलम् |
| अपर्तुः | यस्मिन्देशे यः वर्षाकालः ततोऽन्यः कालः |
| अप्रतिकृष्टं | न - जीर्णं, मलवत्, स्थूलं च (वस्त्रम्) |
| अप्रतिष्टब्धः | पाणितलं भूम्यां कृत्वा पाण्यालम्बनः |
| अप्रतीभः | अप्रगल्भः, नास्ति प्रतिभा – नवनवोन्मेष-शालिनी प्रज्ञा - यस्य सः, मृदुः, लज्जा-शीलः |
| अप्रतीक्षः | पृष्ठतः अनिरीक्ष्यमाणः |
| अब्लिङ्गा | आपोहिष्ठा इत्यादिऋक् |
| अभित्रासः | रज्जुवेण्यादिना भयोत्पादनम् |
| अभिनिम्रुक्तः (अभिम्रुक्तः) | सुप्ते यस्मिन् सूर्यः अस्तमेति सः |
| अभिमन्यते | मारयति |
| अभिशस्तः | ब्रह्महा |
| अभिसन्धिः | बुद्धिः, सङ्कल्पः |
| अभीचारः | श्येनयागादिः |

| | |
|---|---|
| अभ्युदितः | यस्मिन् सुप्ते, सूर्य उदेति सः |
| अमत्रं | भोजनपात्रम् |
| अवकीर्णी | यो ब्रह्मचारी स्त्रियमुपेयात् सः |
| अवमृष्टं | स्पृष्टम् |
| अवमेहेत् | सिञ्चेत् , क्षरेत् . विसर्जयेत् |
| अवरः | अर्वाचीनः ; कनिष्ठः, चरमः ; अश्रेष्ठः |
| अवरार्घ्यं | अवरमात्रम् |
| अवरोधनं | अपहरणम् |
| अवस्तरणं | उपरिपटः |
| अवाचीनपाणिः | अधोमुखिहस्तः |
| अष्टाक्यं | अष्टकाश्राद्धकर्म गृह्ये उक्तम् |
| असमुदेतः | न सम्पन्नः - कुलशीलविद्यावृत्तसमेतः |
| अस्कन्दयन् | भूमौ अन्नलेपान् अपातयन् |

## आ

| | |
|---|---|
| आजिपथः | येन मार्गेण ग्रामं प्रविश्य गवादिकमपहृत्य अपसरति स मार्गः |
| आजूगुपं | आभिमुख्येन रक्षितवानस्मि |
| आतच्य | यः प[कर्म], तक्राद्यातञ्चनेन संस्कृत्य |
| आतमितोः | यावदङ्गानां ग्लानिर्भवति . |

| | |
|---|---|
| आतुरव्यजन | आतुरत्वप्रकाशः आतुरत्वम् – दुःखम् , क्लेशः |
| आत्ततेजः | तक्रवाजिनादि |
| आत्रेयी | ऋतुस्नाता स्त्री |
| आधानं | निक्षेपणम् |
| आधिः | स्वगृहे परान्वासयित्वा तेभ्यः भृतिग्रहणम् ; स्तोम इति प्रसिद्धः |
| आप्रीतं | क्वचित्कार्ये पाकादौ उपयुक्तम् |
| आभिशस्त्यं | अभिशस्तस्य भावः see अभिशस्त. |
| आमं | पाकरहितम् |
| आमन्त्रणं | आस्थानमण्डपम् ; राजवेश्मनः पुरस्तात् निर्मितः आवसथः |
| आम्नायः | श्रुतिः, वेदः |
| आरात् | दूरतः |
| आलम्भः | स्पर्शः ; संज्ञपनम् [प्राणवियोगकरणम्] |
| आवसथः | वसतिस्थानम्, गृहम् |
| आवसथं | अग्निहोत्रस्थानम्, अग्निगृहम् |
| आविकं | अविः ऊर्णायुः तस्य चर्म &c. |
| आस्रावः | शब्दादिविषयः |
| आहिताग्निः | साग्निकः, अग्निहोत्री |

## इ

| | |
|---|---|
| इदां | इदं-शब्दस्य छान्दसः प्लुतप्रयोगः |
| इदि | इतिशब्दस्य तकारस्य दकारः |
| इष्टं | यज्ञादिकर्म — |
| | अग्निहोत्रं तपः सत्यं वेदानां चार्थपालनम् । |
| | आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ |
| इष्टापूर्तं | इष्टम् अग्निहोत्रादि, पूर्तं स्मार्तकर्म खातादि |
| इष्टिः | यागः |

## ई

| | |
|---|---|
| ईशाते | प्रभवतः [अधिकारिणौ स्याताम् ] |
| ईषिरे | अभ्यनन्दन् |

## उ-ऊ

| | |
|---|---|
| उक्थ्यः | उक्थं सामवेदः तद्वान् यागः, तन्नामक-यागः |
| उत्तम उच्छ्वासः | प्राणवियोगः |
| उदकोपस्पर्शनं | शीतोदकेन स्नानम्, स्नापनम् |
| उदधानं | उदपात्रम्, उदकपात्रम् |

| | |
|---|---|
| उदरारम्भणं | भक्ष्यभोज्यादयः |
| उदाचारः | दृष्टिगोचरप्रदेशः |
| उपधानं | उपबर्हणम् |
| उपवेष्टिती | कटिप्रदेशः द्वितीयेन वाससा वेष्टितः यस्य सः |
| उपव्युषं | उषःसमीपे |
| उपस्तरणं | तूलिका |
| उपायनं | उपनयनम् |
| उलूकः | दिवाभीतः |
| ऊर्ध्वरेताः | मुनिः, परिव्राट् |

## ऋ

| | |
|---|---|
| ऋतुः | १. कालः मासद्वयावधिकः, संवत्सरस्य षष्ठो भागः |
| | २. रजोदर्शनादारभ्य षोडशाहोरात्राः |

## ए

| | |
|---|---|
| एकखुरः | अश्वादिः |
| एकसृकः | वृकभेदः |

| | |
|---|---|
| एधः | काष्ठादिः |
| एनः | पापकर्म |

## ऐ

| | |
|---|---|
| ऐणेयं | एणी मृगी तस्याः चर्म |
| ऐलकं | एलका अविः तस्याः क्षीरादि |

## ओ

| | |
|---|---|
| ओषधिः | फलपाकान्तवृक्षः, कदलीधान्यादि |

## औ

| | |
|---|---|
| औपवस्तं | कालान्तरे भोजनम् , उपवासः |
| औपासनं | उपासना सेवा तद्भावः |

## क

| | |
|---|---|
| कच्छपः | कूर्मः |
| करञ्जं | रक्तलशुनम् |
| करम्भः | दधिसक्तुसमाहारः |
| कषायपः | कषायं – वसाविशेषं पिबतीति |
| कर्षः | कृषिः |

| | |
|---|---|
| काजः | वास्यादिवत् वानप्रस्थानामुपकरणविशेषः |
| काण्डसमापनं | व्रतविसर्जनम् |
| किण्वं | सुराप्रकृतिद्रव्यम् |
| कीनाशः | यमः; कर्षकः |
| कुहकः | प्रकाशे शुचिः, एकान्ते यथेष्टचारी |
| क्याकुः | छत्राकम् |
| क्रव्याद् | मांसभक्षकः, गृध्रादिः |
| क्रुञ्चः | बकविशेषः |
| क्रौञ्चः | पक्षिविशेषः |
| क्षवथु | क्षुतम् |
| क्षौमः | अतसीविकारः |

## ख

| | |
|---|---|
| खट्वा | उपरिशय्या |
| खट्वाङ्गं | शिवस्य अस्त्रविशेषः |
| खड्गः | मृगविशेषः यस्य शृङ्गे तैलभाजनम् |

## ग

| | |
|---|---|
| गतिः | शुश्रूषा |
| गर्भशातनं | औषधादिप्रयोगेण गर्भस्य वधः |
| गवयः | गोसदृशः पशुः |

| | |
|---|---|
| गव्यूतिः | गोमार्गः |
| गुप्तिः | रक्षणम् |
| गुप्त्वा | रक्षित्वा |
| गृहमेधी | गृहस्थाश्रमवान् |
| गोधा | कृकलासाकृतिः जन्तुः |

## घ

| | |
|---|---|
| घासः | पलालादिबलीवर्दभक्ष्यः |
| घोषवान् | कर्णश्रावः |

## च

| | |
|---|---|
| चंक्रमणं | पुनःपुनः भ्रमणम् |
| चमसः | यज्ञपात्रविशेषः 'चम्च' इति भाषायाम् ; चम्यते भक्ष्यते अनेनेति । |
| चारणं | कुशीलवः ; नटविशेषः |
| चारी | नृत्याङ्गविशेषः |
| चेटः | मत्स्यविशेषः |

## छ

| | |
|---|---|
| छन्दोविचितिः | छन्दसां विचितिः यत्र सा, श्रुतिच्छान्दसां प्रत्यायकं शास्त्रम् |

| | |
|---|---|
| छर्दनं | वमनम् |

## ज

| | |
|---|---|
| जघन्यं<br>जघन्यः | पश्चात्, चरमः, पृष्ठभागः, नीचः, अधमः |

## ड

| | |
|---|---|
| डेरिका | गन्धमूषिका |

## त

| | |
|---|---|
| तन्तुः | आत्मसन्तानः |
| तामली | तामलः – मूलोदकसंज्ञविशेषः वृक्षः तस्य त्वचा ग्रथिता |
| तालनं | हस्तयोरास्फालनम् |
| तिष्यः | पुष्यमासः |
| तूलः (तूलम् ?) | आगामिनी संपत् |
| तैष्यी | पुष्ययुक्ता पौर्णमासी |
| तोक्म | ईषदङ्कुरितं व्रीह्यादि |
| त्रिषवणं | त्रयाणां सवनकालानां समाहारः |
| त्रैविद्यवृद्धः | त्र्यवयवा विद्या, तां ये पठन्ति अर्थतः विदन्ति ते त्रैविद्याः, तेषु वृद्धः पक्वज्ञानः |

| | |
|---|---|
| त्वगालम्भनं | स्रक्चन्दनादि |

## द

| | |
|---|---|
| दधिधानी | दधि धीयते यस्यां सा स्थाली |
| दह्नः | त्रेधा विभक्ताया रात्रेः अन्त्यो भागः |
| दात्रम् | अस्त्रविशेषः, दो अवखण्डने – द्यति, दाति अनेनेति |
| दिधिषूपतिः | ज्येष्ठायामनूढायां कनीयस्या वोढा अग्रदिधिषुः ; पश्चादितरस्या वोढा दिधिषूपतिः |
| दीविता | द्यूतक्रीडनकर्ता |
| दुष्प्रलम्भः | प्रलम्भनम् विसंवादनम्, मिथ्याफलाख्यानम् |
| देहली | गृहावग्रहणी, द्वाराग्रस्थानम् |

## ध

| | |
|---|---|
| धुर्यः | बलीवर्दः, धुरं वहतीति धुर्यः |

## न

| | |
|---|---|
| निकषः | कृषीवलानामुपकरणं येन कृष्टं क्षेत्रं समीक्रियते |

| | |
|---|---|
| निकामं | यथेप्सितम् |
| निगमः | चत्वरः, ग्रामनिर्गममार्गः |
| नियोगः | निवेदनम् |
| निराकृतिः | अनधीतः |
| निवेशः | दारकर्म |
| निर्वेषः | प्रायश्चित्तम् |
| निश्शृङ्खणं | नासिकामलस्य निःसरणम् |
| निष्ठ्यम् | अङ्गुलीस्फोटनम् |
| निष्ठा | विद्यासमाप्तिः |

## प

| | |
|---|---|
| परारिकाः | डुण्डुभाख्यया म्लेच्छानां प्रसिद्धाः |
| परावान् | सुखस्य परा मात्रा – यस्मिन् स लोकः |
| परिक्रुष्टं (अन्नं) | 'भोक्तुकामा आगच्छत' इत्येवं परिक्रुश्य सर्वत आहूय यद्दीयते तत् |
| परिमोषणं | मोषणम्, अपहारः |
| परिवास्य | क्षुरादिना छित्त्वा |
| परिवित्तः | अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः |
| परिवित्तिः | कृतविवाहे कनिष्ठे अविवाहितो ज्येष्ठः |
| परिविन्नः | १. ज्येष्ठस्य भार्यामुपयच्छमानः ; |

| | |
|---|---|
| निकामं | यथेप्सितम् |
| निगमः | चत्वरः, ग्रामनिर्गममार्गः |
| नियोगः | निवेदनम् |
| निराकृतिः | अनधीतः |
| निवेशः | दारकर्म |
| निर्वेषः | प्रायश्चित्तम् |
| निश्शृङ्खणं | नासिकामलस्य निःसरणम् |
| निष्टथ्यम् | अङ्गुलीस्फोटनम् |
| निष्ठा | विद्यासमाप्तिः |

## प

| | |
|---|---|
| परारिकाः | डुण्डुभाख्यया म्लेच्छानां प्रसिद्धाः |
| परावान् | सुखस्य परा मात्रा – यस्मिन् स लोकः |
| परिक्रुष्टं (अन्नं) | 'भोक्तुकामा आगच्छत' इत्येवं परिक्रुश्य सर्वत आहूय यद्दीयते तत् |
| परिमोषणं | मोषणम्, अपहारः |
| परिवास्य | क्षुरादिना छित्त्वा |
| परिवित्तः | अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः |
| परिवित्तिः | कृतविवाहे कनिष्ठे अविवाहितो ज्येष्ठः |
| परिविन्नः | १. ज्येष्ठस्य भार्यामुपयच्छमानः ; |

| | |
|---|---|
| प्रचलाकः | कामरूपी कृकलासः |
| प्रतीपं | प्रतिकूलम् |
| प्रतुदः (प्रतुत्?) | तुण्डेन प्रतुद्य ये भक्षयन्ति ते दार्वाघाटादयः |
| प्रत्यवायः | दोषः, विघ्नः |
| प्रत्याचक्षाणा | या स्त्री तिरस्करोति |
| प्रत्यापत्तिः | शुद्धिः |
| प्रदरः | भूमेः स्वयं दीर्णः प्रदेशः |
| प्रयतः | शुद्धः |
| प्रयमणं | शुद्ध्यर्थमाचमनम् |
| प्रश्नः | अनुयोगः, पृच्छा |
| प्रह्वः | अवनम्य स्थितः |
| प्राचार्यः | आचार्यस्याचार्यः |
| प्रेंखोलनं | आन्दोलनम्, इतस्ततश्चालनम् |
| प्रोदकीभावः | अनार्द्रभावः |
| प्लावनं | प्लुतः |
| प्लेङ्खः | दोलास्तम्भः, तोरणस्तम्भः |

## फ

| | |
|---|---|
| फाणितं | रसविशेषः, इक्षुरसः (?) |

## ब

| | |
|---|---|
| बस्तः | छागः |
| ब्रह्मोज्झं | ब्रह्महननम् |

## भ

| | |
|---|---|
| भक्तापचयः | भक्तम् - अन्नम् , तस्य ह्रासः |
| भरूजः | भ्रष्टो यवः |
| भाक्तिकः | भक्तार्हः कर्मकारादिः |
| भासः | श्येनाकृतिः पीनतुण्डः |
| भूतसंप्लवः | महाभूतप्रलयः |
| भ्रूणः | षडङ्गस्य वेदस्य अध्येता ; प्रयोगशास्त्रस्य सव्याख्यस्य अर्थवित् , कर्मानुष्ठाता, अनुष्ठापयिता ब्राह्मणः । अत्र बोधायनः — " वेदानां किंचिदधीतः ब्राह्मणः ; एकां शाखामधीतः श्रोत्रियः ; अङ्गाध्यायी अनूचानः ; कल्पाध्यायी ऋषिकल्पः; सूत्रप्रवचनाध्यायी भ्रूणः " |

## म

| | |
|---|---|
| माञ्जिष्ठम् | मञ्जिष्ठारागयुतम |

| | |
|---|---|
| मिथ्याध्ययनं | नियमातिक्रमेण अध्ययनम् |
| मुञ्जः | तृणविशेषः |
| मूढः | अतिश्लक्ष्णतया यस्य पलालादेः मूलाग्रवि- |
| मूलं | पितृसंपत् |
| | भागो न ज्ञायते सः |
| मूषिकला | मूषिकपुरीष. |
| मृदुरः | मकरः |
| मृषोद्यं | अनृतवचनम् |

## य

| | |
|---|---|
| यमसू | एकस्मिन् प्रसवे या अनेकं गर्भं सूते सा |
| युग्यः | युगं वहतीति – बलीवर्दः |

## र

| | |
|---|---|
| रक्तदन् | मलिनदन्तः |
| रेफायति | रेफा - शोभा – शोभते |
| रौरवं | रुरुः - बिन्दुमान् मृगः, तस्य विकारं चर्म |

## ल

| | |
|---|---|
| लिङ्गं | यथोक्तं कर्तव्यम्, चिह्नम्, अनुमानम् |

# व

| | |
|---|---|
| वयः | विहगः |
| वारुणी | 'इमं मे वरुण' इत्यादिवरुणदेवताको मन्त्रः |
| वार्धुषिकः | वृद्ध्या जीवः |
| वार्ध्राणस | १. श्वेतः लोहितो वा मूर्धा यस्य सः पक्षि-विशेषः<br>२. वार्ध्रं चर्म तदाकारा नासिका यस्य सः पक्षिविशेषः |
| वास्तु | गृहम् |
| विचित्य | निरूप्य अर्थस्थितिमन्विष्य |
| विरमणं | उत्सर्जनम् |
| विहारः | यज्ञदीक्षा ; यज्ञकर्म |
| वृषली | पितृगृहे अविवाहिता रजःस्वला कन्या |
| वृहति | उत्पाटयति |
| वृहती | उत्तरीयवस्त्रं - वार्ताकी |
| वैभीतकः | विभीतकवृक्षस्य विकारः |
| वैरमणं | विरमणम् , मरणम् |
| व्यभिहास | आभिमुख्येन हसनम् |
| व्युपजापः | कर्णयोः मुहुः जल्पनम् |
| व्युपतोदः | अङ्गुल्यदिना घट्टनं यदाभिमुख्यार्थं क्रियते |
| व्यृद्धः | विशेषेण ऋद्धः, समृद्धः |

व्रात्यः व्रते साधुः व्रत्यः, स एव - व्रात्यः

# श

| | |
|---|---|
| शठः | वक्रचित्तः |
| शतबलिः | बहुशकलः रोहिताख्यः मत्स्यविशेषः |
| शमः | मन्युपरित्यागः |
| शम्योपाः | शमी - बीजकोशी तस्यामुष्यन्ते - दह्यन्ते, कालवशेन पच्यन्ते इति कोशीधान्यानि मुद्गमाषचणकादीनि |
| शरावः | पात्रविशेषः |
| शर्यकः (शल्यकः) | कश्चन मृगः यस्य चर्मणा तनुत्राणं क्रियते |
| शाकः | वृक्षविशेषः 'सेगोन्' इति भाषायाम्; शिरीषवृक्षः; अर्जुनपत्रम् |
| शाणी | पटी |
| शाणीपक्षः | पट्याः आयामविस्तरयोः उभयोः अर्धम् |
| शिङ्घाणिका | नासिकामलम् |
| शिपिविष्टः | खलतिः, विवृतशेफः |
| शिश्नालम्भनं | स्त्र्युपभोगः |
| शुन्धनं | शोधनम् |
| शूक्तम् | कालपाकेन आम्लं जातम् |

| | |
|---|---|
| श्यावः | ओष्ठप्रदेशे अलोमकप्रदेशः |
| श्यावद्: | कृष्णदन्तः |
| श्वाविट् | वराहविशेषः |
| श्वित्रः | श्वेतकुष्ठी |

## ष

| | |
|---|---|
| ष्ठीवनं | आस्यश्लेष्मादीनामुत्सर्गः |

## स

| | |
|---|---|
| संनयन् | पिण्डीकुर्वन् |
| संनिपातः | मेलनम्, संसर्गः संगतिः |
| सम्भुञ्जती | परस्परभोगस्य निमित्तभूता |
| सम्भोजिनी | परस्परं भुञ्जते अस्यामिति - लोकः |
| संविभागः | अग्रयादिदानम् |
| संवेशनं | शयनम्, मैथुनम् |
| सꣳस्था | समापनम्, मरणम् |
| संस्था | यागः, क्रतुभेदः |
| सक्तुः | पिष्टम् |
| सन्धिनी | या गर्भिणी सती दुग्धा, सा |
| सपत्नः | शत्रुः |
| समयः | १. पौरुषेयी व्यवस्था ; संकेतः २. शुश्रूषा |

| | |
|---|---|
| समुदेतः | सम्पन्नः, कुलशीलविद्यावृत्तवयोभिः समेतः |
| समूहनी | संमार्जनी, दर्भनिर्मिता वेदाकृतिः |
| सर्षपः | सस्यविशेषः, तन्तुभः |
| सलावृकी | वृकावान्तरभेदः |
| सवनं | सुत्या, अभिषवः, सोमसन्धानम् |
| सादनं | सदनम्, लोकः, स्थानम्, आसनम् |
| साम्परायः | परलोकः |
| सिक् | वस्त्रदशा |
| सिषाधयिषन् | साधयितुमिच्छन् |
| सुपर्णः | श्येनः |
| सुवर्णनाभः | सुवर्णपुष्पम् [?] |
| सुषिरा | अन्तःप्रवेशयोग्या |
| सूर्मिः | आयसी ताम्रमयी वा अन्तस्सुषिरा स्त्रीप्रकृतिः |
| सेरी | सीरवाहयोक्त्ररज्जुः |
| स्पृहती | सस्यधान्यादिकं भक्षयन्ती |
| स्वस्तरः | पलालशय्या |
| स्वैरिकर्म | मैत्रप्रसाधनदन्तप्रक्षालनादिकर्म |

## ह

| | |
|---|---|
| हावयित्वा | होमं कारयित्वा |



# ERRATA

[ Note:—

Read Vice Chanceller in charge for Offg. Vice Chanceller in page 7 line 9 of the preface.

Read the lines 3–7 in page 11 after कल्पते in the last line of the page 5.

Read स्वां तु छायामवमेहेत् after the line 2 in page 10.

Read सामान्यधर्मा: (continued) after the line 8 in page 30. ]

| Page | Line | For | Read |
|---|---|---|---|
| २ | ९ | धर्मशेषात् | धर्मशेषान् |
| ८ | ४ | वर्षधारासु | वर्षधारासु |
| ८ | १७ | वयस: उद्यम्य | वयस उद्यम्य |
| १० | Footnote | lines 3–4 | lines 5–6 |
| ११ | १ | केचित् ; कर्मफल.. | केचित् कर्मफलशेषेण |
| १४ | १४-१५ | स्वर्णपुष्टिश्च | स्वर्गः पुष्टिश्च |
| २७ | ११ | करण्डपराण्डुपवारिका: | करण्डपलण्डुपरारिका: |
| ३० | ४ | तूर्णीं | तूष्णीं |
| ३१ | ५ | मूलं मूलं | मूलं तूलं |
| ३१ | ६ | मृत्युर्व्युवाच | मृत्युरुवाच |
| ३१ | १८ | व्यतिव्रजेत् । अरण्ये | व्यतिव्रजेत् ; अरण्ये |
| ३१ | १९ | त्रियं कुशल... | त्रियम् । कुशल... |

| Page | Line | For | Read |
|---|---|---|---|
| ३२ | १४ | धर्मविप्रतिषिद्धभोगान् | धर्माविप्रतिषिद्धभोगान् |
| ३३ | १३ | सतीकर्मभिः | सती कर्मभिः |
| ३३ | Footnote | Read with the lines | Read the lines |
| ३४ | १६ | यथर्तुग च्छतः | यथर्तु गच्छतः |
| ३८ | ४ | व्युद्धो भवति | व्यूढो भवति |
| ३९ | १८ | हवा | हत्वा |
| ४० | १२ | डेरिकाश्च | डेरिकाश्व |
| ४२ | ६ | वालिङ्गाभिः | वाब्लिङ्गाभिः |
| ४२ | ८ | शूद्र | शूद्रः |
| ४३ | ६ | स्वपन्नमभिम्रुक्तो | स्वपन्नभिम्रुक्तो |
| ४४ | २ | अध्यात्मिकान् | आध्यात्मिकान् |
| ४४ | ९ | सिलोञ्च: | सिलोञ्छः |
| ४४ | १५ | रसानां चरसैः | रसानां च रसैः |
| ६६ | १० | ष्ठेवन | ष्ठीवन |
| ६६ | १२ | प्रतीघात | प्रतिघात |

Glossary:

| | | | |
|---|---|---|---|
| i | 3 | commentater | commentator |
| iii | 12 | अनिरीक्ष्यमाणः | अनिरीक्षमाणः |
| xvii | 3 | Add the fifth line | to the third. |
| xviii | 20 | अंगुल्यदिना | अंगुल्यादिना |